# भासनाटकचक्रम्

संशोधकः, सम्पादकश्च
रामजी उपाध्यायः

प्रकाशकः
भारतीय-संस्कृति-संस्थानम्
महामनापुरी, वाराणसी-२२०००५

## PREFACE

The theory of Sanskrit dramaturgy has its roots in Bharata's Nāṭyaśāstra and so is the practice of it rooted in the dramas of Bhāsa. As a matter of fact the dramas of Bhāsa have been utilised as source and model by later dramatists, dramaturgists and specialists of dramatics in structuring of plots, shaping characters, communicating cherished ideas and ideals as also in conceiving the stge-arrangements and devices for presenting the intended effects. These valuable plays have been for quite some time collectively and even singly out of print. This has led me to undertake the publication of the present volume.

In order to update the theory of drama by incorporating the new features, which appeared subsequent to Bharata's Nāṭyaśāstra, we need to study the plays of Bhāsa as well as other eminent Sanskrit dramatists. This part of research would be facilitated if all the dramas of each playwright, not only of Bhāsa but of other eminent dramatists, are made readily available in single volumes. There had been such a volume of all the dramas of Bhāsa published by the Oriental Book Agency, Pune, but it has been since long out of print. Kālidāsa's complete works have been quite often published by the Hindu University, Varanasi and usefully utilised by scholars and researchers.

### *New Features of the Present Edition*

I. The text of the dramas has been revised in the light of pertinent, grammatical, philological and contextual references while keeping in view the fact that Bhāsa sometimes does not observe the Pāṇinian rules of grammar.

II. Sanskrit Chāyā of Prakrit pieces in these dramas as also of other dramas is faulty and hence requires a thorough revision as they were composed not by the original authors but by immature later scholars who had not been experts of linguistic and philological developments of Sanskrit words. Such lapses in Chāyā have been rectified.

III. According to dramaturgical rules Praveśaka and Viṣkambhaka should have been placed out of the body of acts but it has been done only exceptionally in the printed dramas. In the edition in hand this mistake has been corrected. The portions of the texts, not recognised as Praveśaka and Viṣkambhaka in earlier editions, have been brought out wherever necessary.

IV. Spelling mistakes due to inadvertence of editors in the printed texts have been by and large corrected.

V. Wrong readings of earlier editions, rooted in the copyists' errors, have been corrected.

I admit that the text of these dramas as presented by me is not yet perfect. But I have sincerely attempted to improve upon the earlier texts with the hope that what I have done will be helpful to the band of workers who will ever be engaged in editing not only Bhāsa's dramas but also other ancient texts in general. I am sure some new mss. of these dramas will be discovered and thereby many textual problems will be finally resolved and lacunae filled up.

—Ramji Upadhyaya

Mahamanapuri, Varanasi-5
Nov. 16, 1986

## नाटकानुक्रमणिका

# स्वप्नवासवदत्तस्य

## नाटकीय-भूमिका

**पुरुषभूमिका**

१. उदयनः ( वत्सराजः )—वत्सदेशस्य राजा, नायकः

२. यौगन्धरायणः—मन्त्री

३. रुमण्वान्—मन्त्री

४. वसन्तकः—विदूषकः

५. ब्रह्मचारी—लावाणकाश्रमस्य विद्यार्थी

६. काञ्चुकीयः— मगधराजप्रासादे, उज्जयिनीराजप्रासादे च ।

**स्त्रीभूमिका**

७. वासवदत्ता—उदयनस्य महाराज्ञी ( आवन्तिका )

८. पद्मावती—मगधराजकुमारी, नायिका

९. अङ्गारवती—वासवदत्ताया माता

१०. तापसी—मगधतपोवनवासिनी

११. मधुकरिका } पद्मावती-सख्यौ
१२. पद्मिनिका }

१३. वसुन्धरा—वासवदत्ताया धात्री

१४. विजया—वत्सराजस्य प्रतिहारी

# स्वप्नवासवदत्तम्

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

सूत्रधारः —

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १

एवमार्यमिश्रान् विज्ञापयामि । अये ! किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

( नेपथ्ये )

उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

सूत्रधारः — भवतु, विज्ञातम् ।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥ २

( निष्क्रान्तः )

इति स्थापना

## अथ प्रथमोऽङ्कः

( प्रविश्य )

भटौ—उस्सरह उस्सरह अय्या! उस्सरह। [ उत्सरतोत्सरतार्याः उत्सरत। ]

( ततः . प्रविशति परिव्राजकवेषो यौगन्धरायण आवन्तिकावेषधारिणी वासवदत्ता च )

यौगन्धरायणः — ( कर्णं दत्त्वा ) कथमिहाप्युत्सार्यते। कुतः,

धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया॥ ३

वासवदत्ता — अय्य! को एसो उस्सारेदि। [ आर्य! क एष उत्सारयति। ]

यौगन्धरायणः — भवति! यो धर्मादात्मानमुत्सारयति।

वासवदत्ता — अय्य। ण हि एव्वं वत्तुकामा, अहं वि णाम उस्सारइदव्वा होमि त्ति। [ आर्य! न ह्येवं वक्तुकामा। अहमपि नामोत्सारयितव्या भवामीति। ]

यौगन्धरायणः — भवति! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते।

वासवदत्ता — अय्य! तह परिस्समो परिखेदं ण उप्पादेदि, जह अअं परिभवो। [ आर्य! तथा परिश्रमः परिखेदं नोत्पादयति, यथायं परिभवः। ]

यौगन्धरायणः — भुक्तोज्झित एष विषयोऽत्रभवत्या। नात्र चिन्ता कार्या। कुतः,

पूर्वं त्वयाप्यभिमतं गतमेवमासीच्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।
कालक्रमेण जगतः परिवर्तमाना चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः॥ ४

भटौ — उस्सरह अय्या! उस्सरह। [ उत्सरतार्याः उत्सरत। ]

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः — सम्भषक! न खलु न खलूत्सारणा कार्या। पश्य,

परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति॥ ५

उभौ— अय्य ! तह । [ आर्य ! तथा । ]

( निष्क्रान्तौ )

यौगन्धरायणः — हन्त सविज्ञानमस्य दर्शनम् । वत्से ! उपसर्पावस्तावदेनम् ।

वासवदत्ता — अय्य ! तह । [ आर्य ! तथा । ]

यौगन्धरायणः — ( उपसृत्य ) भोः ! किंकृतेयमुत्सारणा ।

काञ्चुकीयः — भोस्तपस्विन् !

यौगन्धरायणः — ( आत्मगतम् ) तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि ।

काञ्चुकीयः — भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्यास्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव यास्यति । तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः । तद् भवन्तः

तीर्थोदकानि समिधः कुसुमानि दर्भान् स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता न हि धर्मपीडामिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥ ६

यौगन्धरायणः — ( स्वगतम् ) एवम् । एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यति । ततः,

प्रद्वेषो बहुमानो वा संकल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥ ७

वासवदत्ता— ( स्वगतम् ) राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मे एत्थ सम्पज्जइ । [ राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र संपद्यते । ]

( ततः प्रविशति पद्मावती सपरिवारा चेटी च )

चेटी — एदु एदु भट्टिदारिआ । इदं अस्समपदं । पविसदु । [ एत्वेतु भर्तृदारिका । इदमाश्रमपदम् । प्रविशतु । ]

( ततः प्रविशत्युपविष्टा तापसी )

तापसी — साअदं राअदारिआए । [ स्वागतं राजदारिकायाः । ]

वासवदत्ता — ( स्वगतम् ) इअं सा राअदारिआ । अभिजणाणुरूवं खु से रूवं । [ इयं सा राजदारिका । [ अभिजनानुरूपं खल्वस्या रूपम् । ]

पद्मावती — अय्ये ! वन्दामि । [ आर्ये ! वन्दे । ]

तापसी — चिरं जीव । पविस । जादे ! पविस । तवोवणाणि णाम अदिहिजणस्स सगेहं । [ चिरं जीव । प्रविश जाते ! प्रविश । तपोवनानि नामातिथिजनस्य स्वगेहम् । ]

पद्मावती—भोदु भोदु । अय्ये ! विस्सत्थम्हि । इमिणा बहुमाणवअणेण अणुग्गहिदम्हि ॥ [ भवतु, भवतु । आर्ये ! विश्वस्तास्मि । अनेन बहुमानवचनेनानुगृहीतास्मि । ]

वासवदत्ता — ( स्वगतम् ) ण हि रूवं एव्व, वाआ वि खु से महुरा । [ न हि रूपमेव, वाचापि खल्वस्या मधुरा । ]

तापसी — भद्दे ! इमं दाव भद्दमुहस्स भइणिअं कोच्चि राआ ण वरेदि । [भद्रे! इमां तावद् भद्रमुखस्य भगिनिकां कश्चिद् राजा न वरयति । ]

चेटी — अत्थि राआ पज्जोदो उज्जइणीए । सो दारअस्स कारणादो दूदसंपादं करेदि । [ अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणाद् दूतसंपातं करोति । ]

वासवदत्ता — ( आत्मगतम् ) भोदु भोदु । एसा अ अत्तणीआ दाणिं संवुत्ता । [ भवतु भवतु । एषा चात्मीयेदानीं संवृता । ]

तापसी — अरिहा खु इअं आइदी इमस्य बहुमाणस्स । उभआणि राअउलाणि महत्तराणि त्ति सुणीअदि । [अर्हा खल्वियमाकृतिरस्य बहुमानस्य । उभये राजकुले महत्तरे इति श्रूयते ।]

पद्मावती — अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं । अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव को किं एत्थ इच्छदि त्ति । [आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् । अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत् कः किमत्रेच्छतीति ]

काञ्चुकीयः — यदभिप्रेतं भवत्या । भो भो आश्रमवासिनस्तपस्विनः । शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

> कस्यार्थः कलशेन को मृगयते वासो यथानिश्चितं
> दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद् भवेत् ।
> आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
> यद् यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥८

यौगन्धरायणः — हन्त दृष्ट उपायः । ( प्रकाशम् ) भोः ! अहमर्थी ।

पद्मावती — दिट्ठिआ सहलं मे तवोवणाभिगमणं । [दिष्टया सफलं मे तपोवनाभिगमनम् । ]

तापसी — संतुट्ठतपस्सिजणं इदं अस्समपदं । आअन्तुएण इमिणा होदव्वं । [ सन्तुष्टतपस्विजनमिदमाश्रमपदम् । आगन्तुकेनानेन भवितव्यम् ।]

काञ्चुकीयः — भोः ! किं क्रियताम् ।

यौगन्धरायणः — इयं मे स्वसा । प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित् कालं परिपाल्यमानाम् । कुतः,

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रैर्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।
धीरा कन्येयं दृष्टधर्मप्रचारा शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९

वासवदत्ता — (आत्मगतम्) हं । इह मं णिक्खिविदुकामो अय्यजोअन्धराअणो । होदु, अविआरिअ कमं ण करिस्सदि । [ इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः । भवतु, अविचार्य क्रमं न करिष्यति । ]

काञ्चुकीयः — भवति ! महती खल्वस्य व्यपाश्रयणा । कथं प्रतिजानीमः । कुतः,

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः ।
सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥ १०

पद्मावती — अय्य ! पढमं उग्घोसिअ को किं इच्छदित्ति अजुत्तं दाणिं विआरिदुं । जं एसो भणादि, तं अणुचिट्ठदु अय्यो । [ आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति तदनुतिष्ठत्वार्यः । ]

काञ्चुकीयः — अनुरूपमेतद्भवत्याभिहितम् ।

चेटी — चिरं जीवदु भट्टिदारिआ एवं सच्चवादिणी । [ चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी । ]

तापसी — चिरं जीवतु भद्दे ! [ चिरं जीवतु भद्रे ! ]

काञ्चुकीयः — भवति ! तथा । ( उपगम्य ) भो ! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या ।

यौगन्धरायणः — अनुगृहीतोऽस्मि तत्रभवत्या । वत्से ! उपसर्पात्रभवतीम् ।

वासवदत्ता — ( आत्मगतम् ) का गई । एसा गच्छामि मन्दभाआ । [ का गतिः । एषा गच्छामि मन्दभागा । ]

पद्मावती — भोदु, भोदु । अत्तणीआ दाणिं संवुत्ता । [ भवतु, भवतु । आत्मीयेदानीं संवृत्ता । ]

तापसी — जा ईदिसी से आइदी, इयं वि राअदारिअत्ति तक्केमि ।
[ यावदीदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि । ]

चेटी — सुट्ठु अय्या भणादि । अहं ति अणुहूदसुहत्ति पेक्खामि । [सुष्ठु आर्या भणति । अहमप्यनुभूतसुखेति प्रेक्षे ]

यौगन्धरायणः — (आत्मगतम्) हन्त भोः! अर्धमवसितं भारस्य। यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति। कुतः,

पद्मावती नरपतेर्महिषी भवित्री दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्यान्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि॥११

(ततः प्रविशति ब्रह्मचारी)

ब्रह्मचारी — (ऊर्ध्वमवलोक्य) स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। अथ कस्मिन् प्रदेशे विश्रमयिष्ये। (परिक्रम्य) भवतु, दृष्टम्। अभितस्तपोवनेन भवितव्यम्। तथाहि—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसंदिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥१२

यावत् प्रविशामि। (प्रविश्य) अये आश्रमविरुद्धः खल्वेष जनः। (अन्यतो विलोक्य) अथवा तपस्विजनोऽप्यत्र। निर्दोषमुपसर्पणम्। अये स्त्रीजनः।

काञ्चुकीयः — स्वैरं स्वैरं प्रविशतु भवान्। सर्वजनसाधारणमाश्रमपदं नाम।

वासवदत्ता — हं। [हम्।]

पद्मावती — अम्मो परपुरुसदंसणं परिहरदि अय्या। भोदु, सुपरिपालणीओ खु मण्णासो। [अम्मो परपुरुषदर्शनं परिहरत्यार्या। भवतु, सुपरिपालनीयः खलु मन्न्यासः]

काञ्चुकीयः — भोः! पूर्वं प्रविष्टाः स्मः। प्रतिगृह्यतामतिथिसत्कारः।

ब्रह्मचारी — (आचम्य) भवतु, भवतु। निवृत्तपरिश्रमोऽस्मि।

यौगन्धरायणः — भोः! कुत आगम्यते, क्व गन्तव्यं क्वाधिष्ठानमार्यस्य।

ब्रह्मचारी — भोः! श्रूयताम्। राजगृहतोऽस्मि। श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामः। तत्रोषितवानस्मि।

वासवदत्ता — (आत्मगतम्) हा लावाणअं णाम। लावाणअसंकित्तणेण पुणो णवीकिदो विअ मे सन्दावो। [हा लावाणकं नाम। लावाणकसंकीर्तनेन पुनर्नवीकृत इव मे संतापः]

यौगन्धरायणः — अथ परिसमाप्ता विद्या।

ब्रह्मचारी — न खलु तावत्।

यौगन्धरायणः — यद्यनवसिता विद्या, किमागमनप्रयोजनम् ।
ब्रह्मचारी — तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।
यौगन्धरायणः — कथमिव ।
ब्रह्मचारी — तत्रोदयनो नाम राजा प्रतिवसति ।
यौगन्धरायणः — श्रूयते तत्रभवानुदयनः । किं सः ।
ब्रह्मचारी — तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल ।
यौगन्धरायणः — भवितव्यम् । ततस्ततः ।
ब्रह्मचारी — ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।
वासवदत्ता — (आत्मगतम्) अळिअं अळिअं खु एदं । जीवामि मन्दभाआ ।
[अलीकमलीकं खल्वेतत् । जीवामि मन्दभागा ।]
यौगन्धरायणः — ततस्ततः ।
ब्रह्मचारी — ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः ।
यौगन्धरायणः — सत्यं पतित इति । ततस्ततः ।
ब्रह्मचारी — ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसंतापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।
वासवदत्ता — (आत्मगतम्) जाणामि जाणामि अय्यउत्तस्स मइ साणुक्कोसत्तणं ।
[जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ।]
यौगन्धरायणः — ततस्ततः ।
ब्रह्मचारी — ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः ।
सर्वे — हा ।
वासवदत्ता — (स्वगतम्) सकामो दाणिं अय्यजोअन्धराअणो होदु । [सकाम इदानीमार्ययौगन्धरायणो भवतु]
चेटी — भट्टिदारिए ! रोदिदि खु इअं अय्या । [भर्तृदारिके! रोदिति खल्वियमार्या ।]
पद्मावती — साणुक्कोसाए होदव्वं । [सानुक्रोशया भवितव्यम् ।]
यौगन्धरायणः — अथ किमथ किम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ।
ब्रह्मचारी — ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः ।

पद्मावती — दिट्ठिआ धरइ। मोहं गतो त्ति सुणिअ सुण्णं विअ मे हिअअं। [ दिष्ट्या ध्रियते। मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम्। ]

यौगन्धरायणः — ततस्ततः।

ब्रह्मचारी — ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः सहसोत्थाय 'हा वासवदत्ते! हा अवन्तिराजपुत्रि! हा प्रिये! हा प्रियशिष्ये!' इति किमपि बहु प्रलपितवान्। किं बहुना,

नैवेदानीं तादृशाश्चक्रवाका नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः।
धन्या सा स्त्री यां तथा वेत्ति भर्ता भर्तृस्नेहात् सा हि दग्धाप्यदग्धा॥ १३

यौगन्धरायणः — अथ भोः! तं तु पर्यवस्थापयितुं न कश्चिद्यत्नवानमात्यः।

ब्रह्मचारी — अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम्। स हि

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः॥ १४

वासवदत्ता — ( स्वगतम् ) दिट्ठिआ सुणिक्खित्तो दाणिं अय्यउत्तो। [ दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः। ]

यौगन्धरायणः — ( आत्मगतम् ) अहो महद्भारमुद्वहति रुमण्वान्। कुतः,

सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः॥ १५

( प्रकाशम् ) अथ भोः! पर्यवस्थापित इदानीं स राजा।

ब्रह्मचारी — तदिदानीं न जाने 'इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह तया सह कुपितम्, इह तया सह शयितम्,' इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वापक्रान्तम्। ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः। ततोऽहमपि निर्गतोऽस्मि।

तापसी — सो खु गुणवन्तो णाम राआ, जो आअन्तुएण वि इमिणा एव्वं पसंसीअदि। [ स खलु गुणवान् नाम राजा य आगन्तुकेनाप्यनेनैवं प्रशस्यते। ]

चेटी — भट्टिदारिए! किं णु खु अवरा इत्थिआ तस्स हत्थं गमिस्सदि। [ भर्तृदारिके! किं नु खल्वपरा स्त्री तस्य हस्तं गमिष्यति। ]

पद्मावती — ( आत्मगतम् ) मम हिअएण एव्व सह मन्तिदं । [ मम हृदयेनैव सह मन्त्रितम् । ]

ब्रह्मचारी — आपृच्छामि भवन्तौ । गच्छामस्तावत् ।

उभौ — गम्यतामर्थसिद्धये ।

ब्रह्मचारी — तथास्तु । ( निष्क्रान्तः )

यौगन्धरायणः — साधु, अहमपि तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छामि ।

काञ्चुकीयः — तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छति किल ।

पद्मावती — अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सदि । [ आर्यस्य भगिनिकार्येण विनोत्कण्ठिष्यति । ]

यौगन्धरायणः — साधुजनहस्तगतैषा नोत्कण्ठिष्यति । ( काञ्चुकीयमवलोक्य ) गच्छामस्तावत् ।

काञ्चुकीयः — गच्छतु भवान् पुनर्दर्शनाय ।

यौगन्धरायणः — तथास्तु । ( निष्क्रान्तः )

काञ्चुकीयः — समय इदानीमभ्यन्तरं प्रवेष्टुम् ।

पद्मावती — अय्ये ! वन्दामि । [ आर्ये ! वन्दे । ]

तापसी — जादे ! तव सदिसं भत्तारं लभेहि । [ जाते ! तव सदृशं भर्तारं लभस्व । ]

वासवदत्ता — अय्ये ! वन्दामि दाव अहं । [ आर्ये ! वन्दे तावदहम् । ]

तापसी — तुवं पि अइरेण भत्तारं समासादेहि । [ त्वमप्यचिरेण भर्तारं समासादय । ]

वासवदत्ता — अणुग्गहीदम्हि ।। [ अनुगृहीतास्मि । ]

काञ्चुकीयः — तदागम्यताम् । इत इतो भवति ! संप्रति हि

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद्रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ।। १६

( निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः ।

———

( ततः प्रविशति चेटी )

चेटी — कुञ्जरिए ! कुञ्जरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी । किं भणासि 'एसा भट्टिदारिआ माहवीलदामण्डवस्स पस्सदो कन्दुएण कीलदि'त्ति । जाव भट्टिदारिअं उवसप्पामि । ( परिक्रम्यावलोक्य ) अम्मो इअं भट्टिदारिआ उक्करिदकण्णचूलिएण वाआमसंजादसेदबिन्दुविइत्तिदेण परिस्सन्तरमणीअदंसणेण मुहेण कन्दुएण कीलन्दी इदो एव्व आअच्छदि । जाव उवसप्पिस्सं । [ कुञ्जरिके ! कुञ्जरिके कुत्र कुत्र भर्तृदारिका पद्मावती । किं भणसि ? एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति । यावद् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्क्षतकर्णचूलिकेन व्यायामसंजातस्वेदबिन्दुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति, यावदुपसर्प्स्यामि । ]

( निष्क्रान्ता )

**इति प्रवेशकः**

# अथ द्वितीयोऽङ्कः

( ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह )

वासवदत्ता — हला ! एसो दे कन्दुओ। [ हला ! एष ते कन्दुकः। ]

पद्मावती — अय्ये। भोदु दाणिं एत्तअं। [ आर्ये ! भवत्विदानीमेतावत् ]

वासवदत्ता — हला ! अदिचिरं कन्दुएण कीलिअ अहिअसञ्जादराआ परकेरआ विअ दे हत्था संवुत्ता। [ हला ! अतिचिरं कन्दुकेन क्रीडित्वाधिकसंजातरागौ परकीयाविव ते हस्तौ संवृत्तौ।

चेटी — कीलदु कीलदु दाव भट्टिदारिआ। णिव्वत्तीअदु दाव अअं कण्णाभावरमणीओ कालो। [ क्रीडतु क्रीडतु तावद् भर्तृदारिका। निर्वर्त्यतां तावदयं कन्याभावरमणीयः कालः। ]

पद्मावती — अय्ये ! किं दाणिं मं ओहसिदुं विअ णिज्झाअसि। [ आर्ये ! किमिदानीं मामुपहसितुमिव निध्यायसि। ]

वासवदत्ता — णहि णहि। हला ! अधिअं अज्ज सोहसि। अभिदो विअ दे अज्ज वरमुहं पेक्खामि। [ नहि नहि। हला ! अधिकमद्य शोभसे। अभित इव तेऽद्य वरमुखं प्रेक्षे। ]

पद्मावती — अवेहि। मा दाणिं मं ओहस। [ अपेहि। मेदानीं मामुपहस। ]

वासवदत्ता — एसम्हि तुह्लिआ भविस्सम्महासेणवहू !। [ एषास्मि तूष्णीका भविष्यमहासेनवधु !

पद्मावती — को एसो महासेणो णाम। [ क एष महासेनो नाम। ]

वासवदत्ता — अत्थि उज्जइणीओ राआ पज्जोदो णाम। तस्स बलपरिमाणणिव्वुत्तं णामधेअं महासेणो त्ति। [ अस्त्युज्जयिनीयो राजा प्रद्योतो नाम। तस्य बलपरिमाणनिर्वृत्तं नामधेयं महासेन इति। ]

चेटी — भट्टिदारिआ तेण रञ्ञा सह संबंधं णेच्छदि। [ भर्तृदारिका तेन राज्ञा सह संबन्धं नेच्छति। ]

वासवदत्ता — अह केण खु दाणिं अभिलसदि। [अथ केन खल्विदानीमभिलषति। ]

चेटी—अत्थि वच्छराओ उदअणो णाम। तस्स गुणाणि भट्टिदारिआ अभिल-

सदि। [अस्ति वत्सराज उदयनो नाम। तस्य गुणान् भर्तृदारिकाभिलषति।]

वासवदत्ता — (आत्मगतम्) अय्यउत्तं भत्तारं अभिलसदि। (प्रकाशम्) केण कारणेण। [आर्यपुत्रं भर्तारमभिलषति। केन कारणेन।]

चेटी — साणुक्कोसो त्ति॥ [सानुक्रोश इति।]

वासवदत्ता — (आत्मगतम्) जाणामि। जाणामि। अअं वि जणो एव्वं उम्मादिदो। [जानामि जानामि। अयमपि जन एवमुन्मादितः।]

चेटी — भट्टिदारिए! जदि सो राआ विरूवो भवे। [भर्तृदारिके! यदि स राजा विरूपो भवेत्।]

वासववत्ता — णहि णहि। दंसणीओ एव्व। [नहि नहि। दर्शनीय एव।]

पद्मावती — अय्ये! कहं तुवं जाणासि। [आर्ये! कथं त्वं जानासि।]

वासवदत्ता — (आत्मगतम्) अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो। किं दाणिं करिस्सं। होदु, दिट्ठं। (प्रकाशम्) हला! एवं उज्जइणीओ जणो मन्तेदि। [आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः। किमिदानीं करिष्यामि। भवतु, दृष्टम्। हला! एवमुज्जयिनीयो जनो मन्त्रयते।]

पद्मावती — जुज्जइ। ण खु एसो उज्जइणीदुल्लहो। सव्वजण-मणोभिरामं खु सोभग्गं णाम। [युज्यते। न खल्वेष उज्जयिनीदुर्लभः। सर्वजनमनोभिरामं खलु सौभाग्यं नाम।]

(ततः प्रविशति धात्री)

धात्री — जेदु भट्टिदारिआ। भट्टिदारिए! दिण्णासि। [जयतु भर्तृदारिका। भर्तृदारिके! दत्तासि।]

वासवदत्ता — अय्ये! कस्स। [आर्ये! कस्मै।]

धात्री — वच्छराअस्स उदअणस्स। [वत्सराजायोदयनाय।]

वासवदत्ता — अह कुसली सो राआ। [अथ कुशली स राजा।]

धात्री — कुसली सो आअदो। तस्स भट्टिदारिआ पडिच्छिदा अ। [कुशली स आगतः। तस्य भर्तृदारिका प्रतीप्सिता च]

वासवदत्ता — अच्चाहिदं। [अत्याहितम्।]

धात्री — किं एत्थ अच्चाहिदं। [किमत्रात्याहितम्।]

वासवदत्ता — ण हु किंचि। तह णाम सन्तप्पिअ उदासीणो होदि त्ति। [ न खलु किंचित्। तथा नाम संतप्योदासीनो भवतीति। ]

धात्री — अय्ये! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि महापुरुसहिअआणि होन्ति। [ आर्ये! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति। ]

वासवदत्ता — अय्ये! सअं एव्व तेण वरिदा। [ आर्ये! स्वयमेव तेन वरिता। ]

धात्री — णहि णहि। अण्णप्पओअणेण इह आअदस्स अभिजणविञ्ञाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा। [ नहि नहि अन्यप्रयोजनेनेहागतस्याभिजनविज्ञानवयोरूपं प्रेक्ष्य स्वयमेव महाराजेन दत्ता। ]

वासवदत्ता — (आत्मगतम्) एव्वं। अणवरद्धो दाणिं एत्थ अय्यउत्तो। [ एवम्। अनपराद्ध इदानीमत्रार्यपुत्रः। ]

( प्रविश्यापरा )

चेटी — तुवरदु दाव अय्या। अज्ज एव्व किल सोभणं णक्खत्तं। अज्ज एव्व कोदुअमङ्गलं कादव्वं त्ति अम्हाणं भट्टिणी भणादि। [ त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभनं नक्षत्रम्। अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भर्त्री भणति। ]

वासवदत्ता — (आत्मगतम्) जह जह तुवरदि, तह तह अन्धीकरेदि मे हिअअं। [ यथा यथा त्वरते, तथा तथान्धीकरोति मे हृदयम्। ]

धात्री — एदु एदु भट्टिदारिआ। [ एत्वेतु भर्तृदारिका। ]

( निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः।

———

## अथ तृतीयोऽङ्कः

( ततः प्रविशति विचिन्तयन्ती वासवदत्ता )

वासवदत्ता—विवाहामोदसंकुले अन्तेउरचउस्साले परित्तजिअ पदुमावदिं आअदम्हि पमदवणं। जाव दाणिं भाअधेअणिव्वुत्तं दुक्खं विणोदेमि। ( परिक्रम्य ) अहो अच्चाहिदं। अय्यउत्तो वि णाम परकेरओ संवुत्तो। जाव उवविसामि। ( उपविश्य ) धञ्ञा खु चक्कवाअवहू, जा अण्णोण्ण-विरहिदा ण जीवइ। ण खु अहं पाणाणि परित्तजामि। अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मन्दभाआ॥ [ विवाहामोदसङ्कुले अन्तःपुर-चतुःशाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम्। यावदिदानीं भागधेय-निर्वृत्तं दुःखं विनोदयामि। अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। यावदुपविशामि। धन्या खलु चक्रवाकवधूः यान्योन्यविरहिता न जीवति। न खल्वहं प्राणान् परित्यजामि। आर्यपुत्रं प्रेक्षे इत्यनेन मनोरथेन जीवामि मन्दभागा ]

( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी )

चेटी — कहिं णु खु गदा अय्या आवन्तिआ। ( परिक्रम्यावलोक्य) अम्मो इअं चिन्तासुञ्ञहिअआ णीहारपडिहदचंदलेहा विअ अमंडिदभद्दअं वेसं धारअन्दी पिअंगुसिलापट्टए उवविट्ठा। जाव उवसप्पामि। ( उपसृत्य ) अय्ये ! आव-न्तिए ! को कालो, तुमं अण्णेसामि। [ क्व नु खलु गता आर्यावन्तिका। अम्मो इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा। यावदुपसर्पामि। आर्ये ! आवन्तिके ! कः कालः, त्वामन्विष्यामि। ]

वासवदत्ता — किण्णमित्तं। [ किंनिमित्तम्। ]

चेटी — अम्हाअं भट्टिणी भणदि 'महाकुलप्पसूदा सिणिद्धा णिउणा' त्ति। इमं दाव कोदुअमालिअं गुम्हदु अय्या। [ अस्माकं भर्त्री भणति महाकुलप्रसूता स्निग्धा निपुणेति। इमां तावत् कौतुकमालिकां गुम्फत्वार्या। ]

वासवदत्ता — अह कस्स किल गुम्हिदव्वं। [ अथ कस्मै किल गुम्फितव्यम् ]

चेटी — अम्हाअं भट्टिदारिआए। [ अस्माकं भर्तृदारिकायै॥ ]

वासवदत्ता — ( आत्मगतम् ) एदं पि मए कत्तव्वं आसी। अहो अकरुणा खु इस्सरा। [ एतदपि मया कर्तव्यमासीत्। अहो अकरुणाः खल्वीश्वराः। ]

चेटी — अय्ये ! मा दाणिं अञ्ञं चिन्तिअ। एसो जामादुओ मणिभूमीए ण्हाअदि। सिग्घं दाव गुम्हदु अय्या। [ आर्ये ! मेदानीमन्यच्चिन्तयित्वा। एष जामातृकः मणिभूमौ स्नाति। शीघ्रं तावद् गुम्फत्वार्या। ]

वासवदत्ता — ( आत्मगतम्) ण सक्कुणोमि अण्णं चिन्तेदुं। प्रकाशम् ) ] हला ! किं दिट्ठो जामादुओ। [ न शक्नोम्यन्यच्चिन्तयितुम्। हला किं दृष्टो जामातृकः। ]

चेटी — आम दिट्ठो भट्टिदारिआए सिणेहेण अम्हाअं कोदूहलेण अ। [ आम, दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च। ]

वासवदत्ता — कीदिसो जामादुओ। [ कीदृशो जामातृकः। ]

चेटी — अय्ये ! भणामि दाव, ण ईरिसो दिट्ठपुव्वो। [ आर्ये ! भणामि तावद्, नेदृशो दृष्टपूर्वः। ]

वासवदत्ता — हला भणाहि भणाहि, किं दंसणीओ ! [ हला ! भण भण, किं दर्शनीयः। ]

चेटी—सक्कं भणिदुं सरचावहीणो कामदेवो त्ति। [ शक्यं भणितुं शरचाप-हीनः कामदेव इति। ]

वासवदत्ता — होदु एत्तअं ॥ [ भवत्वेतावत्। ]

चेटी — किण्णिमित्तं वारेसि ॥ [ किंनिमित्तं वारयसि। ]

वासवदत्ता — अजुत्तं परपुरुससंकित्तणं सोदुं। [ अयुक्तं परपुरुष-संकीर्तनं श्रोतुम्। ]

चेटी — तेण हि गुम्हदु अय्या सिग्घं। [ तेन हि गुम्फत्वार्या शीघ्रम्। ]

वासवदत्ता — इअं गुम्हामि। आणेहि दाव। [इयं गुम्फामि। आनय तावत्।]

चेटी — गण्हदु अय्या। [ गृह्णात्वार्या। ]

वासवदत्ता — ( वर्जयित्वा विलोक्य ) इमं दाव ओसहं किं णाम। [ इदं तावदौषधं किं नाम। ]

चेटी — अविहवाकरणं णाम। [ अविधवाकरणं नाम। ]

वासवदत्ता — ( आत्मगतम् ) इदं बहुसो गुम्हितव्वं मम अ पदुमावदीए अ। ( प्रकाशम् ) इदं दाव ओसहं किं णाम॥ [ इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च। इदं तावदौषधं किं नाम। ]

चेटी — सवत्तिमद्दणं णाम। [ सपत्नीमर्दनं नाम। ]

वासवदत्ता — इदं ण गुम्हिदव्वं। [ इदं न गुम्फितव्यम् । ]

चेटी — कीस। [ कस्मात् ]

वासवदत्ता — उवरदा तस्य भय्या। तं णिप्पओअणं त्ति। [उपरता तस्य भार्या। तन्निष्प्रयोजनमिति।

( प्रविश्यापरा )

चेटी — तुवरदु तुवरदु अय्या। एसो जामादुओ अविहवाहि अब्भन्तरचउस्सलं पवेशीअदि। [ त्वरतां त्वरतामार्या। एष जामातृकोऽविधवाभिरभ्यन्तर-चतुःशालं प्रवेश्यते। ]

वासवदत्ता — अइ ! वदामि, गण्ह एदं। [ अयि ! वदामि गृहाणैतत्। ]

चेटी — सोहणं। अय्ये ! गच्छामि दाव अहं। [ शोभनम्। आर्ये ! गच्छामि तावदहम्। ]

( उभे निष्क्रान्ते )

वासवदत्ता — गदा एसा। अहो अच्चाहिदं। अय्यउत्तो वि णाम परकेरओ संवुत्तो। अवि दाव सय्याए मम दुक्खं विणोदेमि, जदि णिद्दं लभामि। [ गतैषा। अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। अपि तावच्छय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे। ]

( निष्क्रान्ता )

इति तृतीयोऽङ्कः

———

( ततः प्रविशति विदूषकः )

विदूषकः — ( सहर्षम् ) भो ! दिट्ठिआ तत्तहोदो वच्छराअस्स अभिप्पेदविवाह-मङ्गलरमणिज्जो कालो दिट्ठो । भो ! को णाम एदं जाणादि तादिसे वयं अणत्थसलिलावत्ते पक्खित्ता उण उम्मज्जिस्सामो त्ति । इदाणिं पासादेसु वसिअदि, अन्देउरदिग्घिआसु ण्हाईअदि पकिदिमहुरसुउमाराणि मोदअखज्ज-आणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभवीअदि । एक्को खु महन्तो दोसो, मम आहारो सुट्ठु ण परिणमदि । सुप्पच्छदणाए सय्याए णिद्दं ण लभामि, जह वादसोणिदं अभिदो विअ वत्तदि त्ति पेक्खामि । भो ! सुहं णामअपरिभूदं अकल्लवत्तं च । [ भो ! दिष्टचा तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः । भो ! को नामैतज्जानाति तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति । इदानीं प्रासादेषूष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यकानि खाद्यन्त इत्यनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते । एकः खलु महान् दोषः । ममाहारः सुष्ठु न परिणमति । सुप्रच्छदनायां शय्यायां निद्रां नलभे । यथा वातशोणितमभितइव वर्तत इति प्रेक्षे । भोः ! सुखं नामयपरिभूतमकल्यवर्तं च । ]

( ततः प्रविशति चेटी )

चेटी — कहिं णु खु गदो अय्यवसन्तओ । ( परिक्रम्यावलोक्य ) अम्हो एसो अय्यवसन्तओ । ( उपगम्य ) अय्य वसन्तअ ! को कालो तुमं अण्णेसामि । [ कुत्र नु खलु गत आर्यवसन्तकः । अहो एष आर्यवसन्तकः । आर्य वसन्तक ! कः कालस्त्वामन्विष्यामि । ]

विदूषकः — ( दृष्ट्वा ) किंणिमित्तं भद्दे ! मं अण्णेससि । [ किंनिमित्तं भद्रे ! मामन्विष्यसि । ]

चेटी — अम्हाणं भट्टिणी भणादि अवि ण्हादो जामादुओ त्ति । [ अस्माकं भट्टिनी भणति अपि स्नातो जामातृक इति । ]

विदूषकः — किंणिमित्तं भोदी ! पुच्छदि । [ किंनिमित्तं भवती ! पृच्छति । ]

चेटी — किमण्णं । सुमणावण्णअं आणेमि त्ति । [ किमन्यत् । सुमनोवर्णकमानयामीति । ]

विदूषकः — ण्हादो तत्तभवं । सव्वं आणेदु भोदी वज्जिअ भोअणं । [ स्नातस्तत्रभवान् । सर्वमानयतु भवती वर्जयित्वा भोजनम् । ]

चेटी — किंणिमित्तं वारेसि भोअणं । [ किंनिमित्तं वारयसि भोजनम् । ]

विदूषकः — अधण्णस्स मम कोइलाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो । [ अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः । ]

चेटी — ईदिसो एव्व होहि । [ ईदृश एव भव । ]

विदूषकः — गच्छदु भोदी । जाव अहं वि तत्तहोदो सआसं गच्छामि । [ गच्छतु भवती । यावदहमपि तत्रभवतः सकाशं गच्छामि । ]

( निष्क्रान्तौ )

## इति प्रवेशकः

# अथ चतुर्थोऽङ्कः

( ततः प्रविशति सपरिवारा पद्मावती, आवन्तिकावेषधारिणी वासवदत्ता च )

चेटी — किंणिमित्तं भट्टिदारिआ पमदवणं आअदा । [ किंनिमित्तं भर्तृदारिका प्रमदवनमागता । ]

पद्मावती — हला ! ताणि दाव सेहालिआगुम्हआणि पेक्खामि कुसुमिदाणि वा ण वेत्ति । [ हला ! तानि तावच्छेफालिकागुल्मकानि प्रेक्षे कुसुमितानि वा न वेति । ]

चेटी–भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवालन्तरिदेहिं विअ मोत्तिआलम्बएहिं आइदाणि कुसुमेहिं । [ भर्तृदारिके ! तानि कुसुमितानि नाम, प्रवालान्तरितैरिव मौक्तिकालम्बकैराचितानि कुसुमैः । ]

पद्मावती — हला ! जदि एव्वं, किं दाणि विलम्बेसि । [ हला ! यद्येवं किमिदानीं विलम्बयसि । ]

चेटी — तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ जाव अहं वि कुसुमावचअं करेमि । [ तेन ह्यस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भर्तृदारिका यावदहमपि कुसुमावचयं करोमि । ]

पद्मावती — अय्ये ! किं एत्थ उपविसामो । [ आर्ये । किमत्रोपविशावः । ]

वासवदत्ता — एव्वं होदु । [ एवं भवतु । ]

( उभे उपविशतः )

चेटी — ( तथा कृत्वा ) पेक्खदु पेक्खदु भट्टिदारिया अद्धा मणसिला-वट्टएहिं विअ सेहालिआकुसुमेहिं पूरिअं मे अञ्जलिं । [प्रेक्षतां प्रेक्षतां भर्तृदारिका अद्धा मनःशिलापट्टकैरिव शेफालिकाकुसुमैः पूरितं मेऽञ्जलिम् । ]

पद्मावती — ( दृष्ट्वा ) अहो विइत्तदा कुसुमाणं । पेक्खदु पेक्खदु अय्या । [ अहो विचित्रता कुसुमानाम् । प्रेक्षतां प्रेक्षतामार्या । ]

वासवदत्ता — अहो दंसणीअदा कुसुमाणं । [ अहो दर्शनीयता कुसुमानाम् ]

चेटी — भट्टिदारिए ! किं भूयो अवइणुस्सं । [ भर्तृदारिके ! किं भूयोऽवचेष्यामि । ]

पद्मावती — हला ! मा मा भूयो अवइणिअ [ हला मा मा भूयोऽवचित्य । ]

वासवदत्ता — हला ! किंणिमित्तं वारेसि । [ हला ! किंनिमित्तं वारयसि । ]

पद्मावती — अय्यउत्तो इह आअच्छिअ इमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा भवेअं। [ आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं प्रेक्ष्य संमानिता भवेयम् । ]

वासवदत्ता — हला ! पिओ दे भत्ता। [ हला प्रियस्ते भर्ता । ]

पद्मावती — अय्ये ! ण आणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि। [ आर्ये ! न जानामि , आर्यपुत्रेण विरहितोत्कण्ठिता भवामि ]

वासवदत्ता — (आत्मगतम् ) दुक्करं खु अहं करेमि । इअं वि णाम एव्वं मन्तेदि। [ दुष्करं खल्वहं करोमि, इयमपि नामैवं मन्त्रयति । ]

चेटी — अभिजादं खु भट्टिदारिआए मन्तिदं 'पिओ मे भत्त' त्ति । [ अभिजातं खलु भर्तृदारिकया मन्त्रितं प्रियो मे भर्तेति । ]

पद्मावती — एक्को खु मे सन्देहो । [ एकः खलु मे सन्देहः । ]

वासवदत्ता — किं किं। [ किं किम् । ]

पद्मावती — जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति । [ यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति । ]

वासवदत्ता — अदो वि अहिअं । [ अतोऽप्यधिकम् । ]

पद्मावती — कहं तुवं जाणासि । [ कथं त्वं जानासि । ]

वासवदत्ता — ( आत्मगतम् ) हं, अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो। एव्वं दाव भणिस्सं । ( प्रकाशम् ) जइ अप्पो सिणेहो, सा सजणं ण परित्तजदि । [ हम् आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । एवं तावद् भणिष्यामि। यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति । ]

पद्मावती — होदव्वं । [ भवितव्यम् । ]

चेटी — भट्टिदारिए ! साहु भट्टारं भणाहि 'अहं पि वीणं सिक्खिस्सामि'त्ति। [ भर्तृदारिके ! साधु भर्तारं भण, अहमपि वीणां शिक्षिष्य इति । ]

पद्मवती — उत्तो मए अय्यउत्तो [ उक्तो मयार्यपुत्रः । ]

वासवदत्ता — तदो किं भणिदं [ ततः किं भणितम् । ]

पद्मावती — अभणिअ किञ्चि दिग्घं णिस्ससिअ तुण्हीओ संवुत्तो । [ अभणित्वा किंचिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः । ]

वासवदत्ता — तदो तुवं किं विअ तक्केसि । [ ततस्त्वं किमिव तर्कयसि । ]

पद्मावती — तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिण्णदाए मम अग्गदो ण रोदिदि त्ति। [ तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदितीति । ]

वासवदत्ता — ( आत्मगतम् ) धञ्ञा खु म्हि, जदि एव्वं सच्चं भवे। [ धन्या खल्वस्मि, यद्येवं सत्यं भवेत्। ]

( ततः प्रविशति राजा विदूषकश्च )

विदूषकः — ही ही ! पचिअपडिअबन्धुजीवकुसुमविरलवादरमणिज्जं पमदवणं। इदो दाव भवं। [ ही ही ! प्रचितपतितबन्धुजीवकुसुमविरलवातरमणीयं प्रमदवनम्। इतस्तावद् भवान्। ]

राजा — वयस्य वसन्तक ! अयमहमागच्छामि।

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः॥ १

विदूषकः — कहिं णु खु गदा तत्तहोदी पदुमावदी। लदामण्डवं गदा भवे। उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिलअं णाम सिलापट्टअं गदा भवे। आदु अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा भवे, अहव आलिहिदमिअपक्खिसङ्कुलं दारुपव्वदअं गदा भवे। ( ऊर्ध्वमवलोक्य ) ही ही सरअकालणिम्मले अन्तरिक्खे पसादिअबलदेवबाहुदंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं। [ कुत्र नु खलु गता तत्रभवती पद्मावती। लतामण्डपं गता भवेद्। उताहो अस्नकुसुमसंचितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेत्। अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेद्, अथवालिखितमृगपक्षिसंकुलं दारुपर्वतकं गता भवेत्। ही ही शरत्कालनिर्मलेऽन्तरिक्षे प्रसादितबलदेवबाहुदर्शनीयां सारसपंक्ति यावत् समाहितं गच्छन्तीं प्रेक्षतां तावद् भवान्। ]

राजा — वयस्य ! पश्याम्येनाम्

ऋज्वायतां च विरलां च नतोन्नतां च सप्तर्षिवंशकुटिलां च निवर्तनेषु।
निर्मुच्यमानभुजगोदरनिर्मलस्य सीमामिवाम्बरतलस्य विभज्यमानाम्॥ २

चेटी — पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमालापण्डुररमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं। अंहो भट्टा। [ प्रेक्षतां प्रेक्षतां भर्तृदारिका एतां कोकनदमालापाण्डुररमणीयां सारसपंक्तिं यावत् समाहितं गच्छन्तीम्। अहो भर्ता। ]

पद्मावती — हं अय्यउत्तो। अय्ये ! तव कारणादो अय्यउत्तादंसणं परिहरामि। ता इमं दाव माहवीलदामण्डवं पविसामो। [ हम्, आर्यपुत्रः। आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि। तदिमं तावन्माधवीलतामण्डपं प्रविशामः। ]

वासवदत्ता — एव्वं होदु । [ एवं भवतु ]

( तथा कुर्वन्ति )

विदूषकः — तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ तत्रभवती पद्मावतीहागत्य निर्गता भवेत् । ]

राजा — कथं भवान् जानाति ।

विदूषकः — इमाणि अवइदकुसुमाणि सेफालिआगुच्छआणि पेक्खदु दाव भवं। [ इमानपचितकुसुमान् शेफालिकागुच्छकान् प्रेक्षतां तावद् भवान् । ]

राजा — अहो विचित्रता कुसुमस्य, वसन्तक ।

वासवदत्ता — ( आत्मगतम् ) वसन्तअसंकित्तणेण अहं पुण जाणामि उज्जइणीए वत्तामि त्ति [ वसन्तकसंकीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्ते इति । ]

राजा — वसन्तक ! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ।

विदूषकः — भो तह । ( उपविश्योत्थाय ) ही ही सरअकालतिक्खो दुस्सहो आदवो । ता इमं दाव माहवीमण्डवं पविसामो [ भोस्तथा । ही ही शरत्काल-तीक्ष्णो दुःसह आतपः । तदिमं तावन्माधवीमण्डपं प्रविशावः । ]

राजा — बाढम् । गच्छाग्रतः ।

विदूषकः — एव्वं होदु । [ एवं भवतु । ]

( उभौ परिक्रामतः )

पद्मावती — सव्वं आउलं कत्तुकामो अय्यवसन्तओ । किं दाणिं करेम्ह। [ सर्वमाकुलं कर्तुकाम आर्यवसन्तकः । किमिदानीं कुर्मः । ]

चेटी — भट्टिदारिए ! एदं महुअरपरिणिलीणं ओलंबलदं ओधूय भट्टारं वारइस्सं [ भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वार-यिष्यामि ।

पद्मावती — एव्वं करेहि [ एवं कुरु । ]

( चेटी तथा करोति )

विदूषकः — अविहा अविहा, चिट्ठदु चिट्ठदु दाव भवं । [ अविधा अविधा, तिष्ठतु तिष्ठतु तावद् भवान् । ]

राजा किमर्थम् ।

विदूषकः — दासीए पुत्तेहि महुअरेहि पीडिदो म्हि । [ दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि । ]

राजा — मा मा भवानेवम् । मधुकरसंत्रासः परिहार्यः । पश्य,

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३

तस्मादिहैवासिष्यावहे ।

विदूषकः — एव्वं होदु । [ एवं भवतु । ]

( उभावुपविशतः )

चेटी — भट्टिदारिए ! रुद्धा क्खु म्ह वयं । [ भर्तृदारिके ! रुद्धाः खलु स्मो वयम् । ]

पद्मावती — दिट्टिया उववि‍ट्ठो अय्यउत्तो । [ दिष्टयोपविष्ट आर्यपुत्रः । ]

वासवदत्ता (आत्मगतम्) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो । [ दिष्टया प्रकृतिस्थशरीर आर्यपुत्रः ]

चेटी — भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठी । [ भर्तृदारिके ! साश्रुपाता खल्वार्याया दृष्टिः । ]

वासवदत्ता — एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेणसोदआ मे दिट्ठी । [ एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः ।

पद्मावती — जुज्जइ । [ युज्यते । ]

विदूषकः — भो सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किंचि अत्थि । पुच्छामि भवन्तं । [ भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किंचिदस्ति । पृच्छामि भवन्तम् । ]

राजा — छन्दतः ।

विदूषकः — का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा । [ का भवतः प्रिया । तदानीं तत्रभवती वासवदत्ता इदानीं पद्मावती वा ।]

राजा — किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ।

पद्मावती — हला ! ईदिसे सङ्कडे निक्खित्तो अय्यउत्तो । [ हला ! ईदृशे सङ्कटे निक्षिप्त आर्यपुत्रः । ]

वासवदत्ता — ( आत्मगतम् ) अहं अ मन्दभाआ । [ अहं च मन्दभागा । ]

विदूषकः — सेरं सेरं भणादु भवं । एक्का उवरदा, अवरा असण्णिहिदा । [ स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपरासंनिहिता । ]

राजा — वयस्य ! न खलु न खलु ब्रूयाम् । भवांस्तु मुखरः ।

पद्मावती — एत्तएण भणिदं अय्यउत्तेण । [ एतावता भणितमार्यपुत्रेण । ]

विदूषकः — भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं । एसा सन्दट्ठा मे जीहा । [ भोः ! सत्येन शपामि, कस्मा अपि नाख्यास्यामि ! एषा संदष्टा मे जिह्वा । ]

राजा — नोत्सहे, सखे ! वक्तुम् ।

पद्मावती — अहो इमस्स पुरोभाइदा । एत्तिएण हिअअं ण जाणादि । [ अहो अस्य पुरोभागिता । एतावता हृदयं न जानाति । ]

विदूषकः — किं ण भणादि मम । अणाचक्खिअ इमादो सिलावट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं । [ किं न भणति मह्यम् । अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम् । एष रुद्धोऽत्रभवान् । ]

राजा — किं बलात्कारेण ।

विदूषकः — आंम, बलक्कारेण । [ आम् बलात्कारेण । ]

राजा — तेन हि पश्यामस्तावत् ।

विदूषकः — पसीददु पसीददु भवं । वअस्सभावेण साविदो सि, जइ सच्चं ण भणासि । [ प्रसीदतु प्रसीदतु भवान् । वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि । ]

राजा — का गतिः । श्रूयताम् ।

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥ ४ ॥

वासवदत्ता — ( आत्मगतम् ) भोदु, भोदु । दिण्णं वेदणं इमस्स परिखेदस्स । अहो अञ्ञादवासंपि एत्थ बहुगुणं सम्पज्जइ । [ भवतु भवतु । दत्तं वेतनमस्य परिखेदस्य । अहो अज्ञातवासोऽप्यत्र बहुगुणः संपद्यते । ]

चेटी — भट्टिदारिए ! अदक्खिञ्ञो खु भट्टा । [ भर्तृदारिके ! अदाक्षिण्यः खलु भर्ता । ]

पद्मावती — हला ! मा मा एव्वं । सदक्खिञ्ञो एव्व अय्यउत्तो, जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि । [ हला ! मा मैवम् । सदाक्षिण्य एवार्यपुत्रो, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति । ]

वासवदत्ता — भद्दे ! अभिजणस्स सदिसं मन्तिदं । [ भद्रे ! अभिजनस्य सदृशं मन्त्रितम् । ]

राजा — उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया, तदा वासवदत्ता, इदानीं पद्मावती वा ।

पद्मावती — अय्यउत्तो पि वसन्तओ संवुत्तो । [ आर्यपुत्रोऽपि वसन्तकः संवृत्तः । ]

विदूषकः — किं मे विप्पलविदेण । उभओ पि तत्तहोदीओ में बहुमदाओ । [ किं मे विप्रलपितेन । उभया अपि तत्रभवत्यौ मे बहुमते । ]

राजा — वैधेय ! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे ।

विदूषकः — किं मं पि बलक्कारेण । [ किं मामपि बलात्कारेण । ]

राजा — अथ किं, बलात्कारेण ।

विदूषकः — तेण हि ण सक्कं सोदुं । [ तेन हि न शक्यं श्रोतुम् । ]

राजा — प्रसीदतु प्रसीदतु महाब्राह्मणः । स्वैरं स्वैरमभिधीयताम्

विदूषकः — इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहुमदा । तत्तहोदी पदुमावदी तरुणी दंसणीआ अकोवणा अणहङ्कारा महुरवाआ सदक्खिञ्ञा । अअं च अवरो महन्तो गुणो, सिणिद्धेण भाअणेण मं पच्चुगच्छइ 'कहिं णु खु गदो अय्यवसन्तओ'त्ति । [ इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहंकारा मधुरवाचा सदाक्षिण्या । अयं चापरो महान् गुणः । स्निग्धेन भोजनेन मां प्रत्युद्गच्छति—कुत्र न खलु गत आर्यवसन्तक इति । ]

वासवदत्ता — भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं । [ भवतु भवतु, वसन्तक ! स्मरेदानीमेताम् । ]

राजा — भवतु भवतु, वसन्तक ! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै ।

विदूषकः — अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु उवरदा वासवदत्ता । [ अविधा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता । ]

राजा — ( सविषादम् ) एवम् । उपरता वासवदत्ता ।

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ५

पद्मावती — रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ । [ रमणीयः खलु कथायोगो नृशंसेन विसंवादितः । ]

वासवदत्ता — ( आत्मगतम् ) भोदु भोदु, विस्सत्थम्हि । अहो पिअं णाम, ईदिसं वअणं अपच्चक्खं सुणीअदि । [ भवतु भवतु, विश्वस्तास्मि । अहो प्रियं नाम, ईदृशं वचनमप्रत्यक्षं श्रूयते । ]

विदूषकः — धारेदु धारेदु भवं । अणदिक्कमणीओ हि विही । ईदिसं दाणिं एदं । [ धारयतु धारयतु भवान् । अनतिक्रमणीयो हि विधिः । ईदृशमिदानीमेतत् । ]

राजा — वयस्य ! न जानाति भवानवस्थाम् । कुतः,

दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद् विमुच्येह बाष्पं प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥ ६

विदूषकः — अस्सुपादकिलिण्णं खु तत्तहोदो मुहं। जाव मुहोदअं आणेमि। ( निष्क्रान्तः )। [ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम्। यावन्मुखोदकमानयामि। ]

पद्मावती—अय्ये! बप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं। जाव णिक्कमम्ह। [ आर्ये! बाष्पाकुलपटान्तरितमार्यपुत्रस्य मुखम्। यावन्निष्क्रामामः। ]

वासवदत्ता—एव्वं होदु। अहव चिट्ठ तुवं। उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं। अहं एव्व गमिस्सं। [ एवं भवतु। अथवा तिष्ठ त्वम्। उत्कण्ठितं भर्तारमुज्झित्वायुक्तं निर्गमनम्। अहमेव गमिष्यामि। ]

चेटी — सुट्ठु अय्या भणादि। उवसप्पदु दाव भट्टिदारिआ। [ सुष्ठ्वार्या भणति। उपसर्पतु तावद् भर्तृदारिका। ]

पद्मावती — किं णु खु पविसामि। [ किं नु खलु प्रविशामि। ]

वासवदत्ता — हला। पविस। ( इत्युक्त्वा निष्क्रान्ता )। [ हला! प्रविश। ]

( प्रविश्य )

विदूषकः — ( नलिनीपत्रेण जलं गृहीत्वा ) एसा तत्तहोदी पदुमावती। [ एषा तत्रभवती पद्मावती। ]

पद्मावती — अय्य वसन्तअ! किं एदं। [ आर्य वसन्तक! किमेतत्। ]

विदूषकः — एदं इदं। इदं एदं। एतदिदम्। इदमेतत्। ]

पद्मावती — भणादु भणादु अय्यो भणादु। [ भणतु भणत्वार्यो भणतु। ]

विदूषकः — भोदि! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुगादं खु तत्तहोदो मुहं। ता गण्हदु होदी इदं मुहोदअं। [ भवति! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम्। तद् गृह्णातु भवतीदं मुखोदकम्। ]

पद्मावती — ( आत्मगतम् ) अहो सदक्खिञ्ञस्स जणस्स परिजणो वि सदक्खिञ्ञो एव्व होदि। ( उपेत्य ) जेदु अय्यउत्तो। इदं मुहोदअं। [ अहो सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति। जयत्वार्यपुत्रः। इदं मुखोदकम्। ]

राजा — अये पद्मावती। ( अपवार्य ) वसन्तक किमिदम्।

विदूषकः — ( कर्णे ) एव्वं विअ। [ एवमिव। ]

राजा — साधु वसन्तक साधु! ( आचम्य ) पद्मावति! आस्यताम्।

पद्मावती — जं अय्यउत्तो आणवेदि । ( उपविशति ) [ यदार्यपुत्र आज्ञापयति । ]
राजा — पद्मावति !

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७

( आत्मगतम् )

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ८

विदूषकः — उइदं तत्तहोदो मअधराअस्स अवरण्हकाले भवन्तं अग्गदो करिअ सुहिज्जणदंसणं । सक्कारो हि णाम सक्कारेण पडिच्छिदो पीदिं उप्पादेदि । ता उट्ठेदु दाव भवं । [ उचितं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम् । सत्कारो हि नाम सत्कारेण प्रतीप्सितः प्रीतिमुत्पादयति । तदुत्तिष्ठतु तावद् भवान् । ]

राजा — बाढम् । प्रथमः कल्पः । ( उत्थाय )

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥ ९

( निष्क्रान्ताः सर्वे )

इति चतुर्थोऽङ्कः ।

———

( ततः प्रविशति पद्मिनिका )

पद्मिनिका — महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं। [ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् । ]

( प्रविश्य )

मधुकरिका — हला ! इअम्हि। किं करीअदु। [ हला ! इयमस्मि । किं क्रियताम् । ]

पद्मिनिका — हला किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति। [ हला किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखापितेति । ]

मधुकरिका — हद्धि । [ हा धिक् । ]

पद्मिनिका — हला ! गच्छ सिग्घं, अय्यं आवन्तिअं सद्दावेहि। केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि। तदो सअं एव्व आगमिस्सदि। [ हला ! गच्छ शीघ्रम् आर्यामावन्तिकां शब्दापय । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति । ]

मधुकरिका — हला ! किं सा करिस्सदि। [ हला किं सा करिष्यति । ]

पद्मिनिका — सा हु दाणिं महुराहि कहाहि भट्टिदारिआए सीसवेदणं विणोदेदि। [ सा खल्विदानीं मधुराभिः कथाभिर्भर्तृदारिकायाः शीर्षवेदनां विनोदयति । ]

मधुकरिका — जुज्जइ। कहिं सअणीयं रइदं भट्टिदारिआए। [ युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः । ]

पद्मिनिका — समुद्दगिहके किल सेज्जात्थिण्णा। गच्छ दाणिं तुवं। अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि। [ समुद्रगृहके किल शय्यास्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्वेषयामि । ]

मधुकरिका — एव्वं होदु ( निष्क्रान्ता ) [ एवं भवतु । ]

पद्मिनिका — कहिं दाणिं अय्यवसंतअं पेक्खामि। [ कुत्रेदानीमार्यवसन्तकं प्रेक्षे । ]

( ततः प्रविशति विदूषकः )

विदूषकः— अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावदी-पाणिग्गहणसमीरिअमाणो अच्चंतसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदरं वड्ढइ ( पद्मिनिकां विलोक्य ) अयि पदुमिणिआ ! पदुमिणिए ! किं इह वत्तदि । [ अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहण-समीर्यमाणोऽत्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्तते । अयि पद्मिनिका ! पद्मिनिके ! किमिह वर्तते । ]

पद्मिनिका — अय्य वसन्तअ ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति । [ आर्य वसन्तक ! किं न जानासि त्वं भर्तृ-दारिका पद्मावती शीर्षवेदनया दुःखापितेति । ]

विदूषकः — भोदि सच्चं ण जाणामि । [ भवति ! सत्यं, न जानामि । ]

पद्मिनिका — तेण हि भट्टिणो णिवेदेहि णं जाव अहं वि सीसाणुलेवणं तुवारेमि । [ तेन हि भर्त्रे निवेदयैनाम् यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

विदूषकः — कहिं सअणीअं रइदं पदुमावदीए । [ कुत्र शयनीयं रचितं पद्मवत्याः । ]

पद्मिनिका — समुद्दगिहके किल सेज्जात्थिण्णा [ समुद्रगृहके किल शय्यास्तीर्णा । ]

विदूषकः — गच्छतु भोदी जाव अहं वि तत्तहोदो णिवेदइस्सं । [ गच्छतु भवती यावदहमपि तत्रभवते निवेदयिष्यामि । ]

( निष्क्रान्तौ )

इति प्रवेशकः ।

## अथ पञ्चमोऽङ्कः

( ततः प्रविशति राजा )

राजा —

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां कालक्रमेण पुनरागतदारभारः।
लावाणके हुतवहेन हृताङ्गयष्टिं तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १

( प्रविश्य )

विदूषकः — तुवरदु तुवरदु दाव भवं। [ त्वरतां त्वरतां तावद् भवान्। ]

राजा — किमर्थम्।

विदूषकः — तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा। [ तत्र भवती पद्मावती शीर्षवेदनया दुःखापिता। ]

राजा — कैवमाह।

विदूषकः — पदुमिणिआए कहिदं। [ पद्मिनिकया कथितम्। ]

राजा — भोः! कष्टं

रूपश्रिया समुदितां गुणतश्च युक्तां लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः पद्मावतीमपि तथैव समर्थयामि ॥ २

अथ कस्मिन् प्रदेशे वर्तते पद्मावती।

विदूषकः — समुद्दगिहक किल सेज्जात्थिण्णा। [ समुद्रगृहके किल शय्यास्तीर्णा। ]

राजा — तेन हि तस्य मार्गमादेशय।

विदूषकः — एदु एदु भवं [ एत्वेतु भवान् ] ( उभौ परिक्रामतः )

विदूषकः — इदं समुद्दगिहकं। पविसदु भवं [ इदं समुद्रगृहकम्। प्रविशतु भवान्। ]

राजा — पूर्वं प्रविश।

विदूषकः — भो! तह। ( प्रविश्य ) अविहा, चिट्ठदु, चिट्ठदु दाव भवं। [ भोः! तथा। अविधा, तिष्ठतु, तिष्ठतु तावद् भवान्। ]

राजा — किमर्थम्।

विदूषकः — एसो खु दीवप्पभावसूइदरूवो वसुधातले परिवत्तमाणो अअं काओदरो [ एषु खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः। ]

राजा — ( प्रविश्यावलोक्य सस्मितम् ) अहो सर्पव्यक्तिर्वैधेयस्य।

ऋज्वायतां हि मुक्ततोरणलोलमालां भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख सर्पम्।
मन्दानिलेन निशि या परिवर्तमाना किंचित् करोति भुजगस्य विचेष्टितानि ॥ ३

विदूषकः — (निरूप्य) सुट्ठु भवं भणादि। ण हु अअं काओदरो। (प्रविश्यावलोक्य) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे। [सुष्ठु भवान् भणति। न खल्वयं काकोदरः। तत्रभवती पद्मावतीहागत्य निर्गता भवेत्]

राजा — वयस्य! अनागतया भवितव्यम्।

विदूषकः — कहं भवं जाणादि। [कथं भवान् जानाति।]

राजा — किमत्र ज्ञेयम्। पश्य,

शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः।
रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥ ४

विदूषकः — तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्तहोदिं पडिवालेदु भवं। [तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान्]

राजा — बाढम्। (उपविश्य) वयस्य! निद्रा मां बाधते। कथ्यतां काचित् कथा।

विदूषकः — अहं कहइस्सं। हुं त्ति करेदु अत्तभवं। [अहं कथयिष्यामि। हुमिति करोत्वत्रभवान्।]

राजा — बाढम्।

विदूषकः — अत्थि णअरी उज्जइणी णाम। तहिं अहिअरमणीआणि उदआह्णाणि वत्तन्ति किल। [अस्ति नगर्युज्जयिनी नाम। तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल।]

राजा—कथमुज्जयिनी नाम।

विदूषकः — जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं। [यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि।]

राजा — वयस्य! न खलु नाभिप्रेतैषा कथा। किं तु,

स्मराम्यवन्त्याधिपतेः सुतायाः प्रस्थानकाले स्वजनं स्मरन्त्याः।
बाष्पं प्रवृत्तं नयनान्तलग्नं स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५

अपि च,

बहुशोऽप्युपदेशेषु यथा मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६

विदूषकः — भोदु, अण्णं कहइस्सं । अत्थि णअरं बम्हदत्तं णाम । तहिं किल राआ कंपिल्लो णाम । [ भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम । ]

राजा — किमिति किमिति ।

विदूषकः — ( पुनस्तदेव पठति )

राजा — मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः — किं राआ बम्हदत्तो, णअरं कंपिल्लं । [ किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । ]

राजा — एवमेतत् ।

विदूषकः — तेण हि मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं । राआ बह्मदत्तो, णअरं कंपिल्लं । ( इति बहुशस्तदेव पठित्वा ) इदाणिं सुणादु भवं । अयि सुत्तो अत्तभवं । अदिसीदला इअं बेला । अत्तणो पावरअं गण्हिअ आअमिस्सं । (निष्क्रान्तः) [ तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । इदानीं शृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावारकं गृहीत्वागमिष्यामि । ]

( ततः प्रविशति वासवदत्ता आवन्तिकावेषेण चेटी च )

चेटी — एदु एदु अय्या । दिढं खु भट्टिदारिआ सीसवेदणाए दुक्खाविदा । [ एत्वेत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखापिता । ]

वासवदत्ता — हद्धि, कहिं सअणीअं रइदं पदुमावदीए । [ हा धिक्, कुत्र शयनीयं रचितं पद्मावत्याः । ]

चेटी — समुद्दगिहके किल सेज्जात्थिण्णा । [ समुद्रगृहके किल शय्यास्तीर्णा । ]

वासवदत्ता — तेण हि अग्गदो याहि । [ तेन ह्यग्रतो याहि । ]

( उभे परिक्रामतः )

चेटी — इदं समुद्दगिहकं । पविसदु अय्या । जाव अहं वि सीसाणुलेवणं तुवारेमि । ( निष्क्रान्ता ) । [ इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

खलु मम मोदकमल्लकः शिवस्य पादमूले तिष्ठति। यावदेनं गृह्णामि। देहि भर्तः! देहि मे मोदकमल्लकम्। भर्तः! त्वमपि मम चोरोऽसि। अविहा आलिखितं खलु मम मोदकमल्लकं सन्तापतिमिरेण सुष्ठु न प्रेक्षे। भवतु प्रमार्जिष्यामि तावदहम्। ही ही साधु रे चित्रकर! भाव! साधु। युक्तलेखतया वर्णानां यथा प्रमार्ज्मि, तथा तथोज्ज्वलतरं भवति। भवतु, उदकेन प्रमार्जिष्यामि। कुत्र नु खलूदकम्। इदं शोभनं शुद्धतटाकम्। अहमिव शिवोऽपि तावदेतस्मिन् मोदकमल्लके निराशो भवतु। ]

(नेपथ्ये)

मोदआ! मोदआ! हहह। [ मोदकाः! मोदकाः! हहह। ]

विदूषकः — अविहा एसो उम्मत्तओ मम मोदअमल्लअं गण्हिअ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्वाहावइ। चिट्ठ चिट्ठ उम्मत्तअ! चिट्ठ। इमिणा दण्डअट्ठेण सीसं दे भिन्दामि। [अविहा एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसन् फेनायमानमलिनवर्षारथ्योदकमिवेत एवाधावति। तिष्ठ तिष्ठोन्मत्तक! तिष्ठ। अनेन दण्डकाष्ठेन शीर्षं ते भिनद्मि। ]

## इति प्रवेशकः

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशत्युन्मत्तकः । )

उन्मत्तकः — मोदआ ! मोदआ ! हहह । [ मोदकाः ! मोदकाः ! हहह ! ]

विदूषकः — भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । ]

उन्मत्तकः — किं मोदआ । कहिं मोदआ । कश्श मोदआ । किं इमे मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति । [ किं मोदकाः । कुत्र मोदकाः । कस्य मोदकाः । किमिमे मोदका उज्झ्यन्ते, अथवा पिनह्यन्ते, उताहो खाद्यन्ते । ]

विदूषकः — ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ । [ न खाद्यन्ते न खाद्यन्ते नोज्झ्यन्ते च । ]

उन्मत्तकः — एसा खु मम रसणा खाइदुकामा लिङ्गाणि करेदि । [ एषा खलु मम रसना खादितुकामा लिङ्गानि करोति । ]

विदूषकः — भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । मा परकेरए सिणेहं करिअ ओवज्झेहि । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । मा परस्मिन् स्नेहं कृत्वा अवबध्यस्व । ]

उन्मत्तकः — के के मं वज्झन्ति । मोदआ खु मं रक्खन्ति ।

णेवच्छविसेसमण्डिदा पीदिं उवदेदुं उवट्ठिआ ।
लाअगिहे दिण्णमुल्लिआ कालवसेण मुहुत्तदुब्बला ॥ १

[ के के मां बध्नन्ति । मोदकाः खलु मां रक्षन्ति ।

नेपथ्यविशेषमण्डिताः प्रीतिमुपदातुमुपस्थिताः ।
राजगृहे दत्तमूल्या कालवशेन मुहुर्तदुर्बलाः ॥ ]

विदूषकः — भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । इमिणा पच्चएण उवज्झाअउलं गन्तव्वं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

उन्मत्तकः — मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं। [मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम्।]

विदूषकः — किं एलावणे तुवं। [किमैरावणस्त्वम्।]

उन्मत्तकः — आम एलावणे अहं। ण हु दाव देवलाजो मं आशणं आलुहदि। शुदं च मया पादपाशिएहिं इन्दे वज्झ त्ति। धाराणिअलेहि विज्जुमईहि कशाहि तालिअ वाउब्भामेण परिब्भमन्तेण भिन्दीअदि मेहबन्धणं। [आम्, ऐरावणोऽहम्। न खलु तावद् देवराजो मामासनमारोहति। श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति। धारानिगलैर्विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण परिभ्रमता भिद्यते मेघबन्धनम्।]

विदूषकः — भो उम्मत्तअ! ण तुवं मम दइस्सिसि, विलविस्सं दाव अहं [भो उन्मत्तक! न त्वं मह्यं दास्यसि, विलपिष्यामि तावदहम्।]

उन्मत्तकः — विलव विलव विक्कोस वा विलव। [विलप विलप विक्रोश वा विलप।]

विदूषकः — अब्बम्हण्णं भो! अब्बम्हण्णं। [अब्रह्मण्यं भोः। अब्रह्मण्यम्।]

उन्मत्तकः — अहं पि विलविस्सं। इन्दे वज्झे भो! इन्दे वज्झे भो!। [अहमपि विलपिष्यामि। इन्द्रो बद्धो भोः!]

विदूषकः — अब्बम्हण्णं भो! अब्बम्हण्णं। [अब्रह्मण्यं भो। अब्रह्मण्यम्।]

(नेपथ्ये)

मा भाआहि मा भाआहि बम्हणाउस! मा भाआहि। [मा बिभीहि ब्राह्मणायुष! मा बिभीहि।]

विदूषकः — (सहर्षम्) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि। अघं बम्हणभावो। ईहामत्तएण समणएण अभअं दीअदि। [आगते चन्द्रे समागतानि सर्वनक्षत्राणि। अघं ब्राह्मणभावः। ईहामात्रकेण श्रमणकेनाभयं दीयते।]

(ततः प्रविशति श्रमणकः)

श्रमणकः — मा भाआहि मा भाआहि बम्हणाउस! मा भाआहि। के के इह, किं कय्यं, विलवन्दि। [मा बिभीहि मा बिभीहि ब्राह्मणायुष! मा बिभीहि। के के इह, किं कार्यं, विलपन्ति।]

विदूषकः — अविहा पडिहाररक्खअउत्ति खु समणओ अणुहोदि। भो समणअ! भअवं! एसो उम्मत्तओ मम मोदअमल्लअं गण्हिअ ण देदि [अविहा प्रतिहाररक्षकवृत्ति खलु श्रमणकोऽनुभवति। भोः श्रमणक! भगवन्। एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा न ददाति।]

श्रमणकः — मोदअं पेक्खामि दाव। [मोदकं प्रेक्षे तावत्।]

उन्मत्तकः — पेक्खदु पेक्खदु शमणअ भवं! [प्रेक्षतां प्रेक्षतां श्रमणक! भवान्।]

श्रमणकः — थु थु। [थू थू।]

विदूषकः — हद्धि उम्मत्तअस्स हत्थे ईहामत्तएण समणएण थूथूकिदा अधण्णस्स मम मोदआ दिट्ठपुरुवा एव्व संवुत्ता। [हा धिगुन्मत्तकस्य हस्ते ईहामात्रकेण थूथूकृता अधन्यस्य मम मोदका दृष्टपूर्वा एव संवृत्ताः।]

श्रमणकः — भो उम्मत्तआउस! णीआदेहि णीआदेहि एदाणि मोदआणि कत्थूलिआफेणपण्डराणि बहुपिट्ठसमिद्धकोमलाणि णिट्ठाणिआ सुरा विअ महुराणि। मा दे खाइदाणि खअं उप्पादन्ति। [भो उन्मत्तायुष निर्यातय! निर्यातय एतानि मोदकानि कस्थूलिकाफेनपाण्डराणि बहुपिष्टसमृद्धकोमलानि निष्ठानिताः सुरा इव मधुराणि। मा ते खादितानि क्षयमुत्पादयन्तु।]

विदूषकः — अविहा मोदआणि त्ति करिअ कण्डिललड्डुआ मे पडिच्छिदा। [अविहा मोदकानीति कृत्वा कण्डिललड्डुका मे प्रतीष्टाः।]

श्रमणकः — उम्मत्तआउस! णीआदेहि णीआदेहि। जदि ण णीआदेसि, तुवं सवेमि। [उन्मत्तकायुष! निर्यातय निर्यातय। यदि न निर्यातयसि, त्वां शपामि।]

उन्मत्तकः — पशीददु पशीददु शमणअ! भअवं। मा खु मा खु मं शविदुं गण्ह। गण्ह। [प्रसीदतु प्रसीदतु! श्रमणक! भगवन् मा खलु मा खलु मां शप्तुम्। गृहाण गृहाण।]

श्रमणकः — बम्हणाउस! पेक्ख पेक्ख ममप्पभावं। [ब्राह्मणायुष! प्रेक्षस्व प्रेक्षस्व मम प्रभावम्।]

विदूषकः — एसो उम्मत्तओ एदेण ईहामत्तएण समणएण उज्झिदं सावं पेक्खअ मोदअमल्लअं भीद भीदं अगङ्गुलिआए पसारिदाए ठाविअ चिट्ठइ। भो उम्मत्तअ! आणेहि मम मोदअमल्लअं। [उन्मत्तक एष एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति। भो उन्मत्तक! आनय मम मोदकमल्लकम्।]

श्रमणक: — एदु एदु भवं। एदेहिं मोदएहिं मं सोत्थि वाअइस्ससि। [ एतु एतु भवान्। एतैर्मोदकैर्मां स्वस्ति वाचयिष्यसि। ]

विदूषक: — ही ही मम केरएहिं सोत्थि वाएमि। मए वि कोडुम्बिअस्स हत्थादो पडिग्गहग्गहीदाणि। ताणि भवदो वि उवाअणं भविस्सदि। सो वि समिद्धो होदु। एसो उम्मत्तओ अग्गिगिहं अहिमुहो गच्छइ। ट्ठिदो मज्झण्हो। पुव्वण्हे वि दाव अअं देसो सुञ्ञो भविस्सदि। जाव अहं वि इमाणि दक्खिणामासआणि मग्गगेहे णिक्खिविअ गच्छामि। एकस्स शाडिआए कय्यं अवरस्स मुल्लेण। [ही ही मम स्वस्ति वाचयामि। मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि। तानि भवतोऽप्युपायनं भविष्यन्ति। सोऽपि समृद्धो भवतु। एष उन्मत्तको ऽग्निगृहमभिमुखो गच्छति। स्थितो मध्याह्नः। पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति। यावदहमपीमान् दक्षिणामाषकान् मार्गगेहे निक्षिप्य गच्छामि। एकस्य शाटिकया कार्यमपरस्य मूल्येन। ]

( सर्वेऽग्निगृहं प्रविशन्ति। )

यौगन्धरायणः — वसन्तक ! शून्यमिदमग्निगृहम्।

विदूषक: — आम भो ! सुञ्ञं खु इदं। [ आं भोः। शून्यं खल्विदम् ]

यौगन्धरायणः — तेन हि परिष्वजेतां भवन्तौ।

उभौ — बाढम्। (परिष्वजेते)

यौगन्धरायणः — भवतु भवतु। तुल्यपरिश्रमौ भवन्तौ। आस्तां भवान्। भवानप्यास्ताम्।

उभौ — बाढम्।

( सर्वे उपविष्टाः। )

यौगन्धरायणः — वसन्तक ! अपि दृष्टस्त्वया स्वामी।

विदूषक: — आम भो ! दिट्ठो तत्तभवं। [ आं भोः ! दृष्टस्तत्रभवान्। ]

यौगन्धरायणः — हन्त भोः अतिक्रान्तयोगक्षेमा रात्रिः। दिवस इदानीं प्रतिपाल्यते।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते।
अनागतार्थान्यशुभानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः ॥२

रुमण्वान् — सम्यग् भवानाह। तुल्येऽपि कालविशेषे निशैव बहुदोषा बन्धनेषु। कुतः,

व्यवहारेष्वसाध्यानां लोके वा प्रतिरज्यताम्।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥३

योगन्धरायणः — वसन्तक ! स्वामिना सह कथितं ननु।

विदूषकः — आम भो ! चिरं एव्व अम्हि तत्तहोदा ओबज्झो। अज्ज चउद्दसीं ण्हाअमाणो पडिवालिदो अ। [ आं भोः ! चिरमेव चास्मि तत्रभवतावबद्धः। अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च। ]

योगन्धरायणः — स्नातः स्वामी।

विदूषकः — ण्हादो अत्तभवं। [ स्नातोऽत्रभवान्। ]

योगन्धरायणः — कृतं देवकार्यम्।

विदूषकः — आम भो ! पणाममत्तेण पूइदा देवदा। [ आं भोः ! प्रणाममात्रेण पूजिता देवताः। ]

योगन्धरायणः — एतामपि बहुमतामवस्थां प्राप्तः स्वामी। कुतः,

स्नातस्य यस्य समुपस्थितदैवतस्य पुण्याहघोषविरमे पटहा नदन्ति।
तस्यैव कालविभवात् तिथिपूजनेषु देवप्रणामचलिता निगलाः स्वनन्ति ॥४

रुमण्वान् — भवत इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः।

योगन्धरायणः — वसन्तक ! गच्छ भूयः स्वामिनं पश्य। विज्ञाप्यतां च स्वामी —या सा प्रयाणं प्रतीह प्रस्तुता कथा, तस्याः श्वः प्रयोगकाल इति। कुतः, स्थानावगाहयवसशय्याभागेष्वाश्रयेषूपन्यस्तौषधिव्याजो नलागिरिर्मन्त्रौषधिनियमसम्भृतः। पुराणकर्मव्यामोहितः। अनुकूलमारुतमोक्तव्यः सज्जितो धूपः। रोषप्रतिकूलोऽस्य सज्जितः प्रतिगजमदः। शालासन्निकृष्टमल्पसाधनं गृहमादीपयितुमग्नित्रासित्वाद् वारणानाम्। गजपतिचित्तोद्भ्रमणार्थं देवकुलेषु स्थापिताः शङ्खदुन्दुभयः। तेन नादेन सर्वसाधनपरिगतशरीरेणावश्यं श्वः प्रद्योतेन स्वामी शरणमुपगन्तव्यः। ततः स्वामिना शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सहव्यापन्नां घोषवतीं हस्तगतां कृत्वा नलागिरिः स्वाधीनः कर्तव्यः। ततो व्यवस्थितासनस्तदानीं स्वामी नलागिरौ,

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम्।
एकाहे व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशां
येनैव द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ॥५

इति।

रुमण्वान् — वसन्तक ! किमिदानीं चिन्त्यते।

विदूषकः — एव्वं चिन्तेमि महन्तो खु भवदो पयत्तो विवज्जिस्सदि त्ति। [ एवं चिन्तयामि महान् खलु भवतः प्रयत्नो विपत्स्यत इति। ]

उभौ — न खलु वयं विज्ञातारः ।

विदूषकः — अहं पुढमं पच्चा भवन्तो । [ अहं प्रथमं पश्चाद्भवन्तौ । ]

योगन्धरायणः — अथ किंकृता कार्यविपत्तिः ।

विदूषकः — वच्छराअस्स अण्णकय्यदाए । [ वत्सराजस्यान्यकार्यतया । ]

योगन्धरायणः — कथमिव ।

विदूषकः — सुणह भवन्तो । [ शृणुतां भवन्तौ ]

उभौ — अवहितौ स्वः ।

विदूषकः — जा सा कालट्ठमी अदिक्कन्दा, तहिं तत्तहोदी वासवदत्ता णाम राअदारिया धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ अवणीदकञ्चुआए सिविआए ओघट्टिदपणालीपस्सुदसलिलविसमं राअमग्गं परिहरिअ जं तं बन्धणदुवारस्स अग्गदो भअवदीए जक्खिणीए ट्ठाणं, तस्सिं देवकय्यं कत्तुं गआ आसी। [या सा कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका धात्रीद्वितीया कन्याकादर्शनं निर्दोषमिति कृत्वापनीतकञ्चुकायां शिबिकायामवघट्टितप्रणालीप्रस्रुतसलिलविषमं राजमार्गं परिहृत्य यत्तद् बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं तस्मिन् देवकार्यं कर्तुं गतासीत् । ]

योगन्धरायणः — ततस्ततः ।

विदूषकः — तदो तत्तभवं तं दिअसं अब्भन्तरबन्धणपरिरक्खअं सिवअं णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो । [ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः । ]

उभौ — ततस्ततः

विदूषकः — तदो पुरुसक्खन्धपरिवट्टणट्ठिदाए सिविआए पकामं दिट्ठा सा राअदारिआ । [ ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिबिकायां प्रकामं दृष्टा सा राजदारिका । ]

योगन्धरायणः — ततस्ततः ।

विदूषकः — किं तदो तदो त्ति । बन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो राअलीलं कत्तुं । [ किं ततस्तत इति । बन्धनमिदानीं प्रमदवनं संभाव्य प्रवृत्तो राजलीलां कर्तुम् । ]

योगन्धरायणः — न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ।

विदूषकः — भो ! संचआरिणो अणत्थ त्ति ईदिसं एव्व। [ भो ! ! संचारिणोऽनर्था इतीदृशमेव । ]

यौगन्धरायणः — सखे ! रुमण्वन् ! स्थिरीक्रियतामात्मा । अनेनैव वेषेण जरा गन्तव्या ।

विदूषकः — भो अहं च एदेण उत्तो भणेहि जोअन्धराअणस्स जह समत्थिदा समत्थणा ण रोअदे मे । समाणे गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि । मा कामप्पधाण त्ति मं अवमण्णेहि । अवमाणस्स अवचिदिं अण्णेसामि त्ति । [ भोः ! अहं चैतेनोक्तः—भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवमन्यस्व । अवमानस्यापचितिमन्विष्यामीति । ]

यौगन्धरायणः — अहो शत्रुजनापहास्यमभिधानम् । अहो निरुपत्रपता खलु बुद्धेः । अहो सुहृज्जनसन्तापकारणम् । अदेशकाले ललितं कामयते स्वामी कुतः,

शक्ता दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम ।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषे राजेति शब्दापनम् ॥६

विदूषकः — भो ! दंसिदो सिणेहो । णिव्विट्ठं पुरुसआरं । साहु उज्झिअ णं गच्छामो । [ भोः ! दर्शितः स्नेहः । निर्विष्टः पुरुषकारः । साधूज्झित्वैनं गच्छामः । ]

यौगन्धरायणः — वसन्तको भवान् ननु । वसन्तक ! मा मैवम् ।

परित्यजाम सन्तप्तं दुःखेन मदनेन च ।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते ॥७

विदूषकः — एव्वं एव्व जरं गमिस्सामो । [ एवमेव जरां गमिष्यामः । ]

यौगन्धरायणः — तन्ननु श्लाघ्यम् ।

विदूषकः — सिलाघणीओ भवे, जदि लोओ जाणादि । [ श्लाघनीयो भवेद्, यदि लोको जानाति । ]

यौगन्धरायणः — न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः ।

विदूषकः — सो वि दाव ण जाणादि । [ सोऽपि तावन्न जानाति । ]

यौगन्धरायणः — काले ज्ञास्यति ।

विदूषकः — कदमो दाणि सो कालो । [ कतम इदानीं स कालः । ]

यौगन्धरायणः — यदेयमारम्भसिद्धिः ।

विदूषकः — तदो तादिसो भवं बन्धणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु । [ ततस्तादृशो भवान् बन्धनाद्राजानमन्तःपुराद्राजदारिकामुभे निर्यातयतु । ]

रुमण्वान् — इह भवता द्रष्टव्यम् ।

यौगन्धरायणः — उभयमिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८

अपि च,

यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ९

( कर्णं दत्त्वा ) अये शब्द इव । ज्ञायतां शब्दः ।

विदूषकः — भो ! तह । ( निष्क्रम्य प्रविश्य ) पडिउत्तदिवस-विस्सम्भेण अविरलं सञ्चरन्तो जणो दीसइ । किं दाणि करम्ह । [ भोस्तथा । भोः ! परिवृत्तदिवस-विस्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः ।]

रुमण्वान् — तेन हि चतुर्द्वारमग्निगृहं, भिद्यतां नः संघातः ।

यौगन्धरायणः — न न । अभिन्नो नः संघातः । भिद्यतामपि संघातः । स्वकार्यमनुष्ठीयताम् ।

उभौ — तह । [ तथा ] ( निष्क्रान्तौ । )

उन्मत्तकः — ही ही चन्दं गिलदि लाहू । मुञ्च मुञ्च चन्दं । यदि ण मुञ्चेशि, मुहं दे पाडिअ मुञ्चावइस्सं । एशे एशे दुट्ठअश्शे परिब्भट्टे आअच्छदि । एशे एशे चउप्पहवीहिआअं । जाव णं आलुहिअ बलिं भक्खिस्सं । एशे एसे दालअभट्टा ! मं तालेह । मा खु मा खु मं तालेह । किं भणाशि—अम्हाणं किंपि णच्चेहि त्ति । दक्खह दक्खह दालअभट्टा ! एशे दालअभट्टा ! पुणो वि मं तालेह इट्टिआहि । मा खु मा खु तालेह । तेण हि अहं पि तुम्हे तालेमि । [ ही ही चन्द्रं गिलति राहुः । मुञ्च मुञ्च चन्द्रम् । यदि न मुञ्चसि, मुखं ते पाटयित्वा मोचयिष्यामि । एष एष दुष्टाश्वः परिभ्रष्ट आगच्छति । एष एष चतुष्पथवीथिकायाम् । यावदेनमारुह्य बलिं भक्षयिष्यामि । एते एते दारकभर्तारः ! मां ताडयथ । मां ताडयथ । मा खलु मा खलु मां ताडयत । किं भणथ—अस्माकं किमपि नृत्येति । पश्यत पश्यत दारकभर्तारः ! । एते दारकभर्तारः ! पुनरपि मां ताडयथ इष्टिकाभिः । मा खलु मा खलु ताडयत । तेन ह्यहमपि युष्मान् ताडयामि ।]

(निष्क्रान्तः ।)

इति तृतीयोऽङ्कः ।

———

(ततः प्रविशति भटः।)

भटः — को कालो अहं भट्टिदारिआए वासवदत्ताए उदए कीलिदुकामाए भद्दवदीपरिचारअं गत्तसेवअं पुण पेक्खामि। भावपुप्फदन्तअ! गत्तसेवअं ण पेक्खसि। किं भणासि—एसो गत्तसेवओ कुण्डिलसुण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति। गच्छदु भावो। (परिक्रम्य) इदं कण्डिलसुण्डिगिणीए गेहं। जाव णं सद्दावेमि। भो गत्तसेवअ! गत्तसेवअ! [कः कालोऽहं भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवतीपरिचारकं गात्रसेवकं न प्रेक्षे। भाव पुष्पदन्तक! गात्रसेवकं न प्रेक्षसे। किं भणसि—एष गात्रसेवकः कण्डिलशौण्डिक्या गेहं प्रविश्य सुरां पिबतीति। गच्छतु भावः। इदं कण्डिलशौण्डिक्या गेहम्। यावदेनं शब्दयामि। भो गात्रसेवक! गात्रसेवक!।]

(नेपथ्ये)

को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ! गत्तसेवअ त्ति मं सद्दावेदि।
[क इदानीमेषोऽत्र राजमार्गे गात्रसेवक! गात्रसेवकेति मां शब्दयति।]

भटः — एसो गत्तसेवओ सुरं पिबिअ पिबिअ हसिअ हसिअ मदिअ मदिअ जवापुप्फं विअ रत्तलोअणो इदो एव्व आअच्छदि। एदस्स पुरदो ण चिट्ठिस्सं [निवृत्य स्थितः।] [एष गात्रसेवकः सुरां पीत्वा पीत्वा हसित्वा हसित्वा मदित्वा मदित्वा जपापुष्पमिव रक्तलोचन इत एवागच्छति। एतस्य पुरतो न स्थास्यामि।]

(ततः प्रविशति यथानिर्दिष्टो गात्रसेवकः।)

गात्रसेवकः — को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ! गत्तसेवअ त्ति मं सद्दावेदि। पाणागारादो णिक्कन्तो दिट्ठ म्हि मम सुसुरेण सुरुट्ठेण। अमुकमल्लएण घिदमरिअलोणरूशिदे मंशखण्डे मुहे पक्खित्तो अ। णुसा रज्जइ पीदा जइ अत्ता ण दण्डुज्जुआ होइ।

धण्णा सुराहिमत्ता धण्णा सुराहि अणुलित्ता।
धण्णा सुराहि ण्हादा धण्णा सुराहि संजविदा॥ १

अधण्णा अत्तणो पुत्तदाराणं कट्ठं पिट्ठं सुणन्ता जे मूढा णरा सुसमिद्धा सुरातटाअं ण जोजअंति ता जाणे जमलोए वा णरअं अत्थि णत्थि वा।

[ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवक ! इति मां शब्दयति। पानागारतो निष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरुष्टेन । अमृतमल्लकेन घृत-मरिचलवणरूषितो मांसखण्डो मुखे प्रक्षिप्तश्च । स्नुषा रज्यति पीता यदि श्वश्रूर्न दण्डोद्यता भवति ।

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः ।
धन्याः सुराभिः स्नाता धन्याः सुराभिः संयापिताः ॥ १ ॥

अधन्या आत्मनः पुत्रदाराणां कष्टं पिष्टं शृण्वन्तो ये मूढा नराः सुसमृद्धाः सुरा-तटाकं न योजयन्ति ततो जाने यमलोके नरकोऽस्ति नास्ति वा । ]

भटः — ( उपसृत्य ) भो गत्तसेवअ ! को कालो तुमं अण्णेसामि । भट्टिदारिआए वासवदत्ताए उदए कीलिदुकामाए भद्दवदी ण दिस्सदि । तुमं दाव मत्तो एत्थ आहिण्डसि ।

[ भो गात्रसेवक ! कः कालस्त्वामन्विष्यामि । भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते । त्वं तावन्मत्तोऽत्राहिण्डसे । ]

गात्रसेवकः — जुज्जइ । सा अ णं मत्ता । सो पुरुसो वि मत्तो । अहं वि मत्तो, तुमं वि मत्तो । सव्वं मत्तसमं होइ ।

[ युज्यते । सा च ननु मत्ता । स पुरुषोऽपि मत्ताऽहमपि मत्तः । त्वमपि मत्तः । सर्वं मत्तसमं भवति । ]

भटः — सव्वं दाव चिट्ठदु । राअउले भद्दपीठिअं ण णिक्कमिअ कुदो अअं आहि-ण्डदि त्ति ।

[ सर्वं तावत् तिष्ठतु । राजकुले भद्रपीठिकां न निष्क्राम्य कुतोऽयमाहिण्डत इति ।]

गात्रसेवकः — इदो आहिण्डामि, एत्थ पिबामि, एदेण पिबामि, मा संरंभेण । किं करीअदु ।

[ इत आहिण्डे । अत्र पिबामि । एतेन पिबामि । मा संरम्भेण । किं क्रियताम् । ]

भटः — हिज्जउ असम्बन्धप्पलावो । सिग्घं भद्दवदिं पवेसेहि ।

[ हीयतामसम्बन्धप्रलापः । शीघ्रम् भद्रवती प्रवेशय ।]

गात्रसेवकः — पविसदु पविसदु भद्दवदी । अंचो मए भद्दवदीए अङ्कुसं आढत्तं

[ प्रविशतु प्रविशतु भद्रवती । अद्य मया भद्रवत्या अङ्कुश आहितः । ]

भटः — सभावविणीदाए भद्दवदीए अंकुसेण किं कय्यं । गच्छ, सिग्घं भद्दवदिं पवेसेहि [ स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम् । गच्छ, शीघ्रम् भद्रवतीं प्रवेशय । ]

गात्रसेवक: — पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए खुरप्पमाला आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः क्षुरप्रमालाहिता। ]

भट: — पुप्फबन्धिआए भट्टवदीए खुरप्पमालाए किं कय्यं। सिग्घं भट्टवदिं पवेसेहि। [ पुष्पबन्धाया भद्रवत्याः क्षुरप्रमालया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवक: — पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए घण्टा आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या घण्टाहिता। ]

भट: — उदए कीलिदुकामाए भट्टवदीए घण्टाए किं कय्यं। सिग्घं भट्टवदिं पवेसेहि। [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवक: — पविसदु पविसदु भट्टवदी। अंघो मए भट्टवदीए कसिअं आढत्तं। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः कशाम् आहिता ]

भट: — कसिएण किं कय्यं। सिग्घं भट्टवदिं पवेसेहि। [ कशया किं कार्यम्। शीघ्रम् भद्रवतीं प्रवेशय। ]

गात्रसेवक: — पविसदु पविसदु भट्टवदी। अंघो [ प्रविशतु प्रविशतु भद्रवती। अङ्घो। ]

भट: — किं अंघो। [ किम् अङ्घो। ]

गात्रसेवक: — अंघो मए। [ अङ्घो मया। ]

भट: — किं तुए। [ किं त्वया। ]

गात्रसेवक: — अंघो भट्ट। [ अङ्घो भद्र। ]

भट: — किं भट्टत्ति। [ किं भद्रेति। ]

गात्रसेवक: — अंघो भट्टवदी। [ अङ्घो भद्रवती। ]

भट: — किं भट्टवदी। [ किं भद्रवती। ]

गात्रसेवक: — भट्टवदी पि आढत्ता। [ भद्रवत्यप्याहिता। ]

भट: — ण तुवं एत्थ अवरज्झो। कण्डिलसुण्डिकिणी खु अवरज्झा, जा राअवाहणं गण्हिअ सुरं देदि। [न त्वमत्रापराद्धः। कण्डिलशौण्डिकी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति। ]

गात्रसेवक: — अंघो मए उत्तं—मा मूलविद्धि विणासेहि त्ति। [अङ्घो मयोक्तम्—मा मूलवृद्धि विनाशयेति। ]

भट: — हं सद्दो विअ। [ हं शब्द इव। ]

गात्रसेवकः — अंघो जाणामि जाणामि, कण्डिलसुण्डिकिणीए गेहं भिन्दिअ भद्दवदी पलाअदि। [ अङ्घो जनामि जानामि, कण्डिलशौण्डिक्या गेहं भित्त्वा भद्रवती पलायते। ]

भटः — किं भणासि-( आकाशे ) एसो भट्टा वच्छराओ वासवदत्तं गण्हिअ णिग्गदो त्ति। [ किं भणसि—एष भर्ता वत्सराजो वासवदत्तां गृहीत्वा निर्गत इति। ]

गात्रसेवकः — ( सहर्षम् ) अविघ्नमस्तु स्वामिनः।

भटः — पिब पिब। अज्ज वि तुमं मत्तो आहिण्डेहि। [पिब पिब। अद्यापि त्वं मत्त आहिण्डस्व। ]

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्धरायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः। यावदहमपि सुहृज्जनस्य संज्ञां करोमि। एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति। भो भोः सुहृदः! शृण्वन्तु शृण्वन्तु भवन्तः —

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥ २

क्वनु खल्वार्ययौगन्धरायणः। (विलोक्य) अये अयमत्रभवान् आर्ययौगन्धरायणः। य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः कचकरचितचर्मव्यग्रवामाग्रहस्तः।
विरचितबहुचीरः पाण्डराबद्धपट्टः सतडिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः॥३

अहो महत् प्रवृत्तं युद्धम्।

हत्वा गजान् सगजिनः सहयांश्च योधानक्षौहिणीमतिविगाह्य बलान्मुहूर्तम्।
नागेन्द्रदन्तमुसलाहतभग्नबाहुभ्रंष्टायुधोऽपि न निवृत्तपदोऽभियातः॥४

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः। यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि। ( निष्क्रान्तः। )

भटः — किं णु खु एदं। पाआरतोरणवज्जं सव्वं कोसम्बी खु इदं। होदु, इमं वुत्तन्तं अमच्चस्स णिवेदेमि। [ किन्नु खल्वेतत्। प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम्। भवत्विमं वृत्तान्तममात्याय निवेदयामि। ]

( निष्क्रान्तः। )

( ततः प्रविशतः साधारणी । )

उभौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्या ! उत्सरत । ]

प्रथमः — अंघो कण्ठस्स दरिअमाणस्स ण उच्चं विरमदि । [ अङ्घो कण्ठस्स दीर्यमाणस्य नोच्चं विरमति । ]

द्वितीयः — अंघो भट्टिदारिआए वासवदत्ताए अवणअणविब्भमदाए विरुवन्तस्स मे वअणं कोच्चि ण सुणादि । अंघो किं भणह—किण्णिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो । किं भणह—कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धराअणेण असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । विजयसुन्दरस्स हत्थिणो दन्तन्तचोदिदो असी विवण्णो । असिदोसेण गहीदो, ण पुरुसदोसेण । [ अङ्घो भर्तृदारिकाया वासवदत्ताया अपनयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति । अङ्घो किं भणथ—किन्निमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं भणथ—कथं गृहीत इति । शृणवन्त्वार्याः । आर्ययौगन्धरायणेनासिद्वितीयेनाक्षौहिण्या अग्रवेगो मुहूर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्तान्तचोदितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण । ]

प्रथमः — अंघो अप्पमत्ता होह तुम्हे । पाआरतोरणवज्जं सव्वं कोसंबी खु इअं । [ अङ्घो अप्रमत्ता भवत यूयम् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्वियम् । ]

उभौ — ओदरदु ओदुरदु अय्यो ओदरदु ।
[ अवतरत्ववतरत्वार्योऽवतरतु । ]

( ततः प्रविशति यौगन्धरायणो बद्धबाहुः फलकशयनेनानीयमानः । )

## इति प्रवेशकः

# अथ चतुर्थोऽङ्कः ।

यौगन्धरायणः — अयमहमवतरामि ।

रिपुगतमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशस्त्रदोषात् ।
अयमहमपनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥ ५

भोः ! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्मणां मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥६

उभौ — उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

यौगन्धरायणः — मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः ।

पश्यन्तु मां नरपतेः पुरुषाः ससत्त्वा राजानुरागनियमेन विपद्यमानम् ।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥७

उभौ — उस्सरह उस्सरह । किं तुम्हेहि ण दिट्ठपुरुवो अय्यजोअन्धराअणो !

[ उत्सरतोत्सरत । किं युष्माभिर्न दृष्टपूर्व आर्ययोगन्धरायणः । ]

यौगन्धरायणः — दृष्टः पूर्वम्, न त्वेवम् । मम हि,

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८

( प्रविश्य )

भटः — अय्य ! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ । [ आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः । ]

यौगन्धरायणः — नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रवत्या ।
ग्रहणमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु ॥ ९

भद्र ! कथं गृहीत इति श्रुतम् ।

भटः — अणुसारिअ णलागिरिणा गहीदो किल । [ अनुसार्य नलागिरिणा गृहीतः किल । ]

यौगन्धरायणः — अस्ति वाहनसामर्थ्यम् । असमायुक्तस्तु सः ।

गजस्याधोरणायुक्तो जवो भवति शिक्षया ।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति ॥ १०

भटः — अय्य ! अमच्चो आह—आउहागारे चिट्ठदु किल अय्यो । पुरुसगुत्तो अअं देसो त्ति । [ आर्य ! अमात्य आह—आयुधागारे तिष्ठतु किलार्यः । पुरुषगुप्तोऽयं देश इति । ]

यौगन्धरायणः — अहो हास्यमभिधानम् ।

अग्निं बद्ध्वा वत्सराजाभिधानं यस्मिन् काले सर्वतो रक्षितव्यम् ।
तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः ॥ ११

( परिक्रम्य )

भटः — इदं आउहागारं । पविसदु अय्यो । [ इदमायुधागारम् । प्रविशत्वार्यः । ]

( प्रविश्य ) भटः — अमच्चो आह—अवणीअदु बन्धणं त्ति । [ अमात्य आह—अपनीयतां बन्धनमिति । ]

यौगन्धरायणः — अक्षीणं मां कुरु । व्यक्तं भरतरोहको मां द्रष्टुमिच्छति । अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि ।

मद्वाक्यैः परिखिद्यमानहृदयं रोषात् प्रमत्ताक्षरैः
प्रारब्धेषु नयच्छलेषु तुलितं तुल्याधिकारोज्झितम् ।
सूक्तैः शास्त्रविनिश्रितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मल्लमपक्रियाविनिहतं व्रीलादिवाधोमुखम् ॥ १२

( ततः प्रविशति भरतरोहकः । )

भरतरोहकः — क्वासौ क्वासौ यौगन्धरायणः ।

अवसितनिजकार्यं वञ्चनैर्दुर्निरीक्षं कथमिव परिभाषे भर्तुरर्थे विपन्नम् ।
चिरमवनतकार्यं चापि निर्युक्तमन्त्रं भुजगमिव सरोषं धर्षितं चोच्छ्रितं च ॥१३

भटः — अय्यजोअन्धराअणो अय्यं पडिवालअन्तो आउहागारे चिट्ठइ । [ आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति ]

भरतरोहकः — भवतु भवतु ।

मन्त्रित्वे वञ्चितो ह्येष सव्याजं नीलहस्तिना ।
प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते ॥ १४

भटः — अय्य ! एसो अमच्चो ।[ आर्य ! एषोऽमात्यः ]

भरतरोहकः — ( उपगम्य ) भो यौगन्धरायणः ! ।

यौगन्धरायणः — भोः !

भटः — अहो सरस्स गम्भीरदा । अय्यस्स एकक्खरेण पूरिदो अयं देसो । [ अहो स्वरस्य गम्भीरता । आर्यस्यैकाक्षरेण पूरितोऽयं देशः । ]

भरतरोहकः — (उपविश्य) भोः ! यौगन्धरायण इत्यशरीराण्यक्षराणि श्रूयन्ते । दिष्ट्या भवान् दृश्यते ।

यौगन्धरायणः — दिष्ट्या भवान् दृश्यत इति । पश्यतु भवान् माम्,

एवं रुधिरदिग्धाङ्गं वैरं नियममास्थितम् ।
गुरोरवर्जितं हत्वा शान्तं द्रौणिमिव स्थितम् ॥ १५

भरतरोहकः — अहो छलेनागतगजारम्भस्यात्मसम्भावना ।

यौगन्धरायणः — किं छलेनेति । तत् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
वद्धः सेवितवान् हि नो नरपतिर्बाहूपधानां क्षितिम् ।
राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो मम ॥ १६

भरतरोहकः — भो यौगन्धरायण ! यदग्निसाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं भोस्तस्करप्रवृत्तिः ।

यौगन्धरायणः — मा मा भवानेवम् । विवाहः खल्वेष स्वामिनः ।

भरतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं न दास्यति ॥ १७

भरतरोहकः — अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः । तदिदानीं किं नावेक्षते ।

यौगन्धरायणः — मा मा भवानेवम् ।

यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु तिष्ठति ।
ततो विमुक्तः स्वशरीररक्षणे यशः प्रदातुं सुहृदां च जीवितम् ॥ १८

भरतरोहकः — यद्येवं, नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्बद्धस्ते स्वामी ।

यौगन्धरायणः — नेति पश्यत्युपक्रोशभयात् ।

भरतरोहकः — अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति । समरावर्जितेषु शत्रुषु किमाह शास्त्रम् ।

योगन्धरायणः — वधः ।

भरतरोहकः — वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः ।

योगन्धरायणः — एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम् ।

भरतरोहकः — एतदपि सम्भाव्यं मन्यते स्वामी ।

योगन्धरायणः — कः संशयः ।

हस्तप्राप्तो हि वो राजा रक्षितस्तेन साधुना ।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते ॥ १९

भरतरोहकः — भवतु भवतु । महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः ।

योगन्धरायणः — अहो हास्यमभिधानम् ।

भवतां चाग्रतो यातः शेषकार्येषु का कथा ।
समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः ॥ २०

( प्रविश्य )

कञ्चुकीयः — ( कर्णे ) एवमिव ।

भरतरोहकः — प्रकाशमुच्यताम् ।

कञ्चुकीयः —

कारणैर्बहुभिर्युक्तैः कामं नापकृतं त्वया ।
गुणेषु न तु मे द्वेषो भृङ्गारः प्रतिगृह्यताम् ॥ २१

योगन्धरायणः — हा धिक् ।

गृहा न निर्वान्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम् ।
इयं तु पूजा मम दण्डधारिणः कृतापराधस्य हि सत्कृतिर्वधः ॥ २२

( नेपथ्ये हाहाकारः क्रियते । )

भरतरोहकः — अये,

को नु खल्वेष सहसा प्रासादाग्राद् विनिःसृतः ।
श्येनपक्षाभिमृष्टानां कुररीणामिव ध्वनिः ॥ २३

भोः ! ज्ञायतां शब्दः ।

कञ्चुकीयः — यदाज्ञापयत्यार्यः । ( निष्क्रम्य प्रविश्य ) एषा तत्रभवत्यङ्गारवती शोकाभिभूतहृदया प्रासादाच्छरीरं विमोक्तुकामा महासेनेनाभिहिता यथा— क्षत्रधर्मेणोद्दिष्टस्ते दुहितुर्विवाहः । किमिदानीं हर्षकाले सन्तप्यसे ।

तच्चित्रफलकस्थयोर्वत्सराजवासवदत्तयोर्विवाहोऽनुष्ठीयताम् इति। तत्र हि,

स्त्रीजनेनाद्य सहसा प्रहर्षव्याकुलक्रमा।
क्रियते मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया॥ २४

यौगन्धरायणः — एवं सम्बन्धं मन्यते महासेनः। तेन ह्यानीयतां भृङ्गारः।

कञ्चुकीयः — गृह्यताम्। ( उपनयति। )

भरतरोहकः — भो यौगन्धरायण ! किं ते भूयः प्रियमुपहरति महासेनः।

यौगन्धरायणः — यदि मे महासेनः प्रसन्नः, किमतः परमिच्छामि।

( भरतवाक्यम् )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः॥ २५॥

( निष्क्रान्ताः सर्वे। )

चतुर्थोऽङ्कः।

प्रतिज्ञानाटिकावसिता।

# प्रतिमायाः

## नाटकीय-भूमिका

### ( प्रधानपात्राणि )

पुरुषाः

१. दशरथः — अयोध्याधिपतिः, नायकस्य पिता

२. रामः — नायकः
३. लक्ष्मणः — अनुनायकः
४. भरतः
५. शत्रुघ्नः
} दशरथस्य पुत्राः

६. सुमन्त्रः — दशरथस्य मन्त्री

७ सूतः — भरतस्य सारथिः

८. रावणः — प्रतिनायकः

९. कञ्चुकीयः

स्त्रियः

१०. कौसल्या — रामस्य माता
११. कैकेयी — भरतस्य माता
१२. सुमित्रा — लक्ष्मणस्य माता
} दशरथस्य पत्न्या

१३. सीता — रामस्य पत्न्या, नायिका

१४. अवदातिका — सीतायाः सखी

# प्रतिमा

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः

सीताभवः पातु सुमन्त्रतुष्टः सुग्रीवरामः सहलक्ष्मणश्च ।
यो रावणार्यप्रतिमश्च देव्या विभीषणात्मा भरतोऽनुसर्गम् ॥ १

( नेपथ्याभिमुखमवलोक्य । )

आर्ये, इतस्तावत् ।

( प्रविश्य । )

नटी — अय्य इअम्हि । [ आर्य, इयमस्मि । ]

सूत्रधारः — आर्ये, इदमेवेदानीं शरत्कालमधिकृत्य गीयतां तावत् ।

नटी — अय्य, तह । ( गायति । ) [ आर्य, तथा । ]

सूत्रधारः — अस्मिन् हि काले

चरति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा ।

( नेपथ्ये )

अय्य अय्य । [ आर्य, आर्य । ]

( आकर्ण्य )

सूत्रधारः — भवतु विज्ञातम्

मुदिता नरेन्द्रभवने त्वरिता प्रतिहाररक्षीव ॥ २ ॥

( निष्क्रान्तौ । )

इति स्थापना ।

---

## अथ विष्कम्भकः

( प्रविश्य । )

प्रतिहारी — अय्य को इह कंचुईआणं संणिहिदो । [ आर्य क इह कञ्चुकीयानां संनिहितः । ]

( प्रविश्य । )

कञ्चुकीयः — भवति, अयमस्मि । किं क्रियताम् ।

प्रतिहारी — अय्य ! महाराजो देवासुरसंगामेसु अप्पडिहदमहारहो दसरहो आणवेदि—सिग्घं भट्टिदारअस्स रामस्य रज्जप्पहावसंजोअकारआ अहिसेअ-सम्भारा आणीअन्तु त्ति । [ आर्य, महाराजो देवासुरसंग्रामेष्वप्रतिहतमहारथो दशरथ आज्ञापयति—शीघ्रं भर्तृदारकस्य रामस्य राज्यप्रभावसंयोगकारका अभिषेकसंभारा आनीयन्तामिति । ]

कञ्चुकीयः — भवति, यद्यदाज्ञप्तं महाराजेन, तत् सर्वमुपस्थापितम् । पश्य

छत्रं सव्यजनं सनन्दिपटहं भद्रासनं कल्पितं
न्यस्ता हेममयाः सदर्भकुसुमास्तीर्थाम्बुपूर्णा घटाः ।
युक्तः पुष्यरथश्च मन्त्रिसहिताः पौराः समभ्यागताः
सर्वस्यास्य हि मङ्गलं स भगवान् वेद्यां वसिष्ठः स्थितः ॥ ३

प्रतिहारी — जई एव्वं, सोहणं किदं । [ यद्येवं, शोभनं कृतम् । ]

कञ्चुकीयः — हन्त भोः

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः ।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥ ४

प्रतिहारी — तुवरदु तुवरदु दाणि अय्यो । [त्वरतां त्वरतामिदानीमार्यः । ]

कञ्चुकीयः — भवति ! इदं त्वर्यते ।

( निष्क्रान्तः । )

प्रतिहारी — ( परिक्रम्यावलोक्य ) अय्य ! संभवअ ! संभवअ ! गच्छ तुवं पि महाराअवअणेण अय्यपुरोहिदं जहोपआरेण तुवारेहि । ( अन्यतो गत्वा । ) सारसिए ! सारसिए ! संगीदसालं गच्छिअ नाडईआणं विण्णवेहि—काल-संवादिणा णाडएण सज्जा होह त्ति । जाव अहं वि सव्वं किदं त्ति महारा-

अस्स णिवेदेमि। ( निष्क्रान्ता। ) [ आर्य! सम्भवक! सम्भवक! गच्छ, त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारेण त्वरय। सारसिके! सारसिके! सङ्गीतशालां गत्वा नाटकीयान् विज्ञापय—कालसंवादिना नाटकेन सज्जा भवतेति। यावदहमपि सर्वं कृतमिति महाराजाय निवेदयामि ]

( ततः प्रविशत्यवदातिका वल्कलं गृहीत्वा। )

अवदातिका — अहो अच्चाहिदं। परिहासेण वि इदं वक्कलं उवणअन्तीए मम एत्तिअं भअं आसी, किं पुण लोभेण परधणं हरन्तस्स। हसिदुं विअ इच्छामि। ण खु एआइणीए हसिदव्वं। [अहो अत्याहितम्। परिहासेनापीदं वल्कलमुपनयन्त्या ममैतावद् भयमासीत्, किं पुनर्लोभेन परधनं हरतः। हसितुमिवेच्छामि। न खल्वेकाकिन्या हसितव्यम्। ]

## इति विष्कम्भकः

# अथ प्रथमोऽङ्कः

( ततः प्रविशति सीता सपरिवारा )

सीता — हंजे, ओदादिआ परिसंकिदवण्णा विअ दिस्सइ। किं णु हु विअ एदं।
[ हञ्जे, अवदातिका परिशङ्कितवर्णेव दृश्यते। किन्नु खल्विवैतत्। ]

चेटी — भट्टिणि ! सुलहावराहो परिअणो णाम। अवरज्झा भविस्सदि।
[ भर्त्रि ! सुलभापराधः परिजनो नाम। अपराद्धा भविष्यति। ]

सीता — णहि णहि। हसिदुं विअ इच्छदि। [ नहि नहि, हसितुमिवेच्छति। ]

अवदातिका — ( उपसृत्य। ) जेदु भट्टिणी ! भट्टिणि ण खु अहं अवरज्झा।
[ जयतु भर्त्री ! भर्त्रि ! न खल्वहमपराद्धा। ]

सीता — का तुमं पुच्छदि। ओदादिए ! किं एदं वामहत्थपरिग्गहिदं। [ का त्वां पृच्छति। अवदातिके ! किमेतद् वामहस्तपरिगृहीतम्। ]

अवदातिका — भर्त्रि ! इदं वक्कलं। [ भर्त्रि ! इदं वल्कलम्। ]

सीता — वक्कलं किस्स आणीदं। [ वल्कलं कस्या आनीतम्। ]

अवदातिका — सुणादु भट्टिणी। णेवच्छपालिणी अय्यरेवा णिव्वुत्तरङ्गप्पओअणं असोअरुक्खस्स एक्कं किसलअं अम्हेहि जाइदा आसि। ण अ ताए दिण्णं। तदो अरिहदि अवराहो त्ति इदं गहिदं। [ शृणोतु भर्त्रि ! नेपथ्यपालिन्यार्यरेवा निवृत्तरङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्माभिर्याचितासीत्। न च तया दत्तम्। ततोऽर्हत्यपराध इतीदं गृहीतम्। ]

सीता — पावअं किदं। गच्छ, णिय्यादेहि। [ पापकं कृतम्। गच्छ, निर्यातय। ]

अवदातिका — भट्टिणि ! परिहासणिमित्तं खु मए एदं आणीदं। [ भर्त्रि ! परिहासनिमित्तं खलु मयैतदानीतम्। ]

सीता — उम्मत्तिए ! एवं दोसो वड्ढइ। गच्छ णिय्यादेहि, णिय्यादेहि।
[ उन्मत्तिके ! एवं दोषो वर्धते। गच्छ, निर्यातय, निर्यातय। ]

अवदातिका — जं भट्टिणी आणवेदि। ( प्रस्थातुमिच्छति। ) [ यद् भर्त्र्याज्ञापयति। ]

सीता — हला ! एहि दाव। [ हला ! एहि तावत्। ]

अवदातिका — भट्टिणि ! इअम्हि । [ भर्त्रि ! इयमस्मि । ! ]

सीता — हला ! किं णु हु मम वि दाव सोहदि । [ हला ! किन्नु खलु ममापि तावच्छोभते । ]

अवदातिका — भट्टिणि ! सव्वसोहणीअं सुरुवं णाम । अलङ्करोदु भट्टिणी [ भर्त्रि ! सर्वशोभनीयं सुरूपं नाम ! अलङ्करोतु भर्त्रि । ]

सीता — आणेहि दाव । ( गृहीत्वालंकृत्य । ) हला ! पेक्ख, किं दाणि सोहदि । [ आनय तावत् । हला ! प्रेक्षस्व किमिदानीं शोभते । ]

अवदातिका — तव खु सोहदि णाम । सोवण्णिअं विअ वक्कलं संवुत्तं । [ तव खलु शोभते नाम । सौवर्णिकमिव वल्कलं संवृत्तम् । ]

सीता — हंजे ! तुवं किञ्चि ण भणासि । [ हञ्जे ! त्वं किञ्चिन्न भणसि । ]

चेटी — णत्थि वाआए पओअणं । इमे पहरिसिदा तणूरुहा मन्तेन्ति । ( पुलकं दर्शयति । ) [ नास्ति वाचया प्रयोजनम् । इमे: प्रहर्षितास्तनूरुहा मन्त्रयन्ते । ]

सीता — हंजें आदंसअं दाव आणेहि [ हञ्जे ! आदर्शकं तावदानय । ]

चेटी — जं भट्टिणी आणवेदि । ( निष्क्रम्य प्रविश्य । ) भट्टिणि ! अअं आदंसओ । [ यद् भर्त्र्याज्ञापयति । भर्त्रि ! अयमादर्शकः । ]

सीता — ( चेटीमुखं विलोक्य । ) चिट्ठदु दाव आदंसओ । तुवं किं वि वत्तुकामा विअ । [ तिष्ठतु तावदादर्शकः । त्वं किमपि वक्तुकामेव । ]

चेटी — भट्टिणि, एवं मए सुदं । अय्यबालाई कञ्चुई भणादि—अहिसेओ अहिसेओ त्ति । [ भट्टिनि ! एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति—अभिषेको ऽभिषेक इति । ]

( प्रविश्यापरा )

चेटी — भट्टिणि ! पिअक्खाणिअं पिअक्खाणिअं । [ भर्त्रि, प्रियाख्यानिकं प्रियाख्यानिकम् । ]

सीता — किं किं पडिच्छिअ मन्तेसि । [ किं किं प्रतीष्य मन्त्रयसे । ]

चेटी — भट्टिदारओ किल अहिसिञ्चीअदि । [ भर्तृदारकः किलाभिषिच्यते । ]

सीता — अवि तादो कुसली । [ अपि तातः कुशली । ]

चेटी — महाराएण एव्व अहिसिञ्चीआदि । [ महाराजेनैवाभिषिच्यते । ]

सीता — जइ एव्वं, दुदीअं मे पिअं सुदं । विसालदरं उच्छङ्गं करेहि । [ यद्येवं, द्वितीयं मे प्रियं श्रुतम् । विशालतरमुत्सङ्गं कुरु । ]

चेटी — भट्टिणि । तह । ( तथा करोति । ) [ भर्त्रि ! तथा । ]

( सीता आभरणान्यवमुच्य ददाति । )

चेटी — भट्टिणि ! पटहसद्दो विअ । [ भर्त्रि ! पटहशब्द इव । ]

सीता — सो एव्व। [ स एव । ]

चेटी — एक्कपदे ओघट्टीअ तुण्हीओ पटहसद्दो संवुत्तो । [ एकपदे अवघट्य तूष्णीकः पटहशब्दः संवृत्तः । ]

सीता — को णु खु उग्घादो अहिसेअस्स । अहव बहुवुत्तन्ताणि राअउलाणि णाम । [को नु खलूद्घातोऽभिषेकस्य । अथवा बहुवृत्तान्तानि राजकुलानि नाम ।]

चेटी — भट्टिणि: एवं मए सुदं—भट्टिदारअं अहिसिंचिअ महाराओ वणं गमिस्सदि त्ति । [ भर्त्रि ! एवं मया श्रुतम्—भर्तृदारकमभिषिच्य महाराजो वनं गमिष्यतीति । ]

सीता — जइ एव्वं, ण सो अहिसेओदओ, मुहोदअं णाम । [ यद्येवं, न तदभिषेकोदकं, मुखोदकं नाम । ]

( ततः प्रविशति रामः । )

रामः — हन्त भोः !

आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
स्कन्धोच्चारणनम्यमानवदनप्रच्योतितोये घटे ।
राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो ! विस्मयः ॥ ५

विश्रम्यतामिदानीं पुत्रेति स्वयं राज्ञा विसर्जितस्यापनीतभारोच्छ्वसितमिव मे मनः । दिष्टया स एवास्मि रामो महाराज एव महाराजः । यावदिदानीं मैथिलीं पश्यामि ।

अवदातिका — भट्टिणि ! भट्टिदारओ खु आअच्छइ । णावणीदं वक्कलं । [ भर्त्रि ! भर्तृदारकः खल्वागच्छति । नापनीतं वल्कलम् । ]

रामः — मैथिलि ! किमास्यते ।

सीता — हं अय्यउत्तो । जेदु अय्य उत्तो [ हं आर्यपुत्रः । जयत्वार्यपुत्रः । ]

रामः — मैथिलि ! आस्यताम् । ( उपविशति । )

सीता — जं अय्यउत्तो आणवेदि । ( उपविशति । ) [यद् आर्यपुत्र आज्ञापयति ।]

अवदातिका — भट्टिणि ! सो एव्व भट्टिदारअस्स वेसो । अलिअं विअ एदं भवे ।
[भर्त्रि ! स एव भर्तृदारकस्य वेषः । अलीकमिवैतद् भवेत् । ]

सीता — तादिमो जणो अलिअं ण मन्तेदि । अहव बहुवुत्तन्ताणि राअउलाणि णाम । [ तादृशो जनोऽलीकं न मन्त्रयते । अथवा बहुवृत्तान्तानि राजकुलानि नाम । ]

रामः — मैथिलि ! किमिदं कथ्यते ।

सीता — ण खु किञ्चि । इअं दारिआ भणादि — अहिसेओ अहिसेओ त्ति ।
[ न खलु किंचित् । इयं दारिका भणति—अभिषेकोऽभिषेक इति । ]

रामः — अवगच्छामि ते कौतूहलम् । अस्त्यभिषेकः । श्रूयताम् । अद्यास्मि महाराजेनोपाध्यायामात्यप्रकृतिजनसमक्षमेकप्रकारसंक्षिप्तं कोसलराज्यं कृत्वा बाल्याभ्यस्तमङ्कमारोप्य मातृगोत्रं स्निग्धमाभाष्य पुत्र ! राम ! प्रतिगृह्यतां राज्यमित्युक्तः ।

सीता — तदाणीं अय्यउत्तेण किं भणिदं । [ तदानीमार्यपुत्रेण किं भणितम् । ]

रामः — मैथिलि ! त्वं तावत् किं तर्कयसि ।

सीता — तक्केमि अय्यउत्तेण अभणिअ किञ्चि दिग्घं णिस्ससिअ महाराअस्स पादमूलेसु पडिअं त्ति । [ तर्कयाम्यार्यपुत्रेणाभणित्वा किञ्चिद् दीर्घं निःश्वस्य महाराजस्य पादमूलयोः पतितमिति । ]

रामः — सुष्ठु तर्कितम् । अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते । तत्र हि पादयोरस्मि पतितः ।

समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥ ६

सीता — तदो तदो । [ ततस्ततः । ]

रामः — ततोऽप्रतिगृह्यमाणेष्वनुनयेषु आसन्नजरादोषैः स्वैः प्राणैरस्मि शापितः ।

सीता — तदो तदो । [ ततस्ततः ।]

रामः — ततस्तदानीं,

शत्रुघ्नलक्ष्मणगृहीतघटेऽभिषेके छत्रे स्वयं नृपतिना रुदता गृहीते ।
सम्भ्रान्तया किमपि मन्थरया च कर्णे राज्ञः शनैरभिहितं च न चास्मि राजा ॥७

सीता — पिअं मे । महाराओ एव्व महाराओ, अय्यउत्तो एव्व अय्यउत्तो ।
[ प्रियं मे । महाराज एव महाराजः. आर्यपुत्र एवार्यपुत्रः । ]

रामः — मैथिलि, किमर्थं विमुक्तालङ्कारासि ।

सीता — ण खु दाव, आवज्झामि । [ न खलु तावत्, आबध्नामि । ]

रामः — न खलु । प्रत्यग्रावतारितैर्भूषणैर्भवितव्यम् । तथाहि—

कर्णौ त्वरापहृतभूषणभुग्नपाशौ संस्रंसिताभरणगौरतलौ च हस्तौ।
एतानि चाभरणभारनतानि गात्रे स्थानानि नैव समतामुपयान्ति तावत् ॥८

सीता — पारेदि अय्यउत्तो अलिअं पि सच्चं विअ मन्तेदुं । [ पारयत्यार्यपुत्रोऽलीकमपि सत्यमिव मन्त्रयितुम् । ]

रामः — तेन हि अलंक्रियताम् । अहमादर्शं धारयिष्ये । ( तथा कृत्वा निर्वर्ण्य । ) तिष्ठ ।

आदर्शे वल्कलानीव किमेते सूर्यरश्मयः ।
हसितेन परिज्ञातं क्रीडेयं नियमस्पृहा ।। ९

अवदातिके, किमेतत् ।

अवदातिका — भट्टा ! किण्णु हु सोहदि ण सोहदित्ति कोदूहलेण आवज्झा । [ भर्तः किन्नु खलु शोभते न शोभत इति कौतूहलेनाबद्धानि । ]

रामः — मैथिलि ! किमिदम् । इक्ष्वाकूणां वृद्धालङ्कारस्त्वया धार्यते । अस्त्यस्माकं प्रीतिः । आनय ।

सीता — मा खु मा खु अय्यउत्तो अमङ्गलं भणादु । [ मा खलु मा खल्वार्यपुत्रोऽमङ्गलं भणतु । ]

रामः — मैथिलि, किमर्थं वारयसि ।

सीता — उज्झिदाहिसेअस्स अय्यउत्तस्स अमङ्गलं विअ मे पडिभादि । [ उज्झिताभिषेकस्यार्यपुत्रस्यामङ्गलमिव मे प्रतिभाति । ]

रामः —

मा स्वयं मन्युमुत्पाद्य परिहासे विशेषतः ।
शरीरार्धेन मे पूर्वमाबद्धा हि यदा त्वया ॥ १०

( नेपथ्ये )

हा हा महाराजः ।

सीता — अय्यउत्त ! किं एदं । [ आर्यपुत्र, किमेतत् । ]

रामः — ( आकर्ण्य । )

नारीणां पुरुषाणां च निर्मर्यादो यदा ध्वनिः ।
सुव्यक्तं प्रभवामीति मूले दैवेन ताडितम् ।। ११

तूर्णं ज्ञायतां शब्दः ।

( प्रविश्य )

कञ्चुकीयः — परित्रायतां परित्रायतां कुमारः

रामः — आर्य ! कः परित्रातव्यः ।

कञ्चुकीयः — महाराजः ।

रामः — महाराज इति । आर्य ! ननु वक्तव्यम्, एकशरीरसंक्षिप्ता पृथिवी रक्षितव्येति । अथ कुत उत्पन्नोऽयं दोषः ।

कञ्चुकीयः — स्वजनात् ।

रामः — स्वजनादिति । हन्त नास्ति प्रतीकारः ।

शरीरेऽरिः प्रहरति हृदये स्वजनस्तथा ।
कस्य स्वजनशब्दो मे लज्जामुत्पादयिष्यति ॥ १२

कञ्चुकीयः — तत्रभवत्याः कैकेय्याः ।

रामः — किमम्बायाः । तेन हि उदर्केण गुणेनात्र भवितव्यम् ।

कञ्चुकीयः — कथमिव ।

रामः — श्रूयतां,

यस्याः शक्रसमो भर्ता मया पुत्रवती च या ।
फले कस्मिन् स्पृहा तस्या येनाकार्यं करिष्यति ॥ १३

कञ्चुकीयः — कुमार ! अलमुपहतासु स्त्रीबुद्धिषु स्वमार्जवमुपनिक्षेप्तुम् । तस्या एव खलु वचनाद् भवदभिषेको निवृत्तः ।

रामः — आर्य, गुणाः खल्वत्र ।

कञ्चुकीयः — कथमिव ।

रामः — श्रूयताम्—

वनगमननिवृत्तिः पार्थिवस्यैव ताव-
न्मम पितृपरवत्ता बालभावः स एव ।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मथ च न परिभोगैर्वञ्चिता भ्रातरो मे ॥ १४

कञ्चुकीयः — अथ च तयानाहूतोपसृतया भरतोऽभिषिच्यतां राज्य इत्युक्तम् । अत्राप्यलोभः ।

रामः — आर्य ! भवान् खल्वस्मत्पक्षपातादेव नार्थमवेक्षते । कुतः,

शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥ १५ ॥

कञ्चुकीयः — अथ—

रामः — अतः परं न मातुः परिवादं श्रोतुमिच्छामि । महाराजस्य वृत्तान्तस्तावदभिधीयताम् ।

कञ्चुकीयः — ततस्तदानीं,

शोकादवचनाद् राज्ञा हस्तेनैव विसर्जितः।
किमप्यभिमतं मन्ये मोहं च नृपतिर्गतः॥ १६

रामः — कथं मोहमुपगतः।

( नेपथ्ये )

कथं कथं मोहमुपगत इति।

यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दयाम्

रामः — ( आकर्ण्य पुरतो विलोक्य। )

अक्षोभ्यः क्षोभितः केन लक्ष्मणो धैर्यसागरः।
येन रुष्टेन पश्यामि शताकीर्णमिवाग्रतः॥ १७

( ततः प्रविशति धनुर्बाणपाणिलक्ष्मणः। )

लक्ष्मणः — ( सक्रोधम् ) कथं कथं मोहमुपगत इति।

यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दयां
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते।
अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं लोकं कर्तुं यतश्छलिता वयम्॥ १८

सीता — अय्यउत्त! रोदिदव्वे काले सोमित्तिणा धणू गहीदं। अपुव्वो खु से आआसो। [ आर्यपुत्र! रोदितव्ये काले सौमित्रिणा धनुर्गृहीतम्। अपूर्वः खल्वस्यायासः। ]

रामः — सुमित्रामातः! किमिदम्।

लक्ष्मणः — कथं कथं किमिदं नाम।

क्रमप्राप्ते हृते राज्ये भुवि शोच्यासने नृपे।
इदानीमपि सन्देहः किं क्षमा निर्मनस्विता॥ १९

रामः — सुमित्रामातः! अस्मद्राज्यभ्रंशो भवत उद्योगं जनयति। आः, अपण्डितः खलु भवान्।

भरतो वा भवेद् राजा वयं वा ननु तत् समम्।
यदि तेऽस्ति धनुःश्लाघा स राजा परिपाल्यताम्॥ २०

लक्ष्मणः — न शक्नोमि रोषं धारयितुम्। भवतु। गच्छामस्तावत् ( प्रस्थितः )

रामः —

त्रैलोक्यं दग्धुकामेव ललाटपुटसंस्थिता।
भ्रुकुटिर्लक्ष्मणस्यैषा नियतीव व्यवस्थिता॥ २१

सुमित्रामातः ! इतस्तावत् ।

लक्ष्मणः — आर्य ! अयमस्मि ।

रामः — भवतः स्थैर्यमुत्पा दयता मयैवमभिहितम् । उच्यतामिदानीम् ।

ताते धनुर्न मयि सत्यमवेक्षमाणे
मुञ्चानि मातरि शरं स्वधनं हरन्त्याम् ।
दोषेषु बाह्यमनुजं भरतं हनानि
किं रोषणाय रुचिरं त्रिषु पातकेषु ॥ २२

लक्ष्मणः — ( सबाष्पम् । ) हा धिक् । अस्मानविज्ञायोपालभसे ।

यत्कृते महति क्लेशे राज्ये मे न मनोरथः ।
वर्षाणि किल वस्तव्यं चतुर्दश वने त्वया ॥ २३

रामः — अत्र मोहमुपगतस्तत्रभवान् । हन्त निवेदितमप्रभुत्वम् । मैथिलि !

मङ्गलार्थेऽनया दत्तान् वल्कलांस्तावदानय ।
करोम्यन्यनृपैर्धर्मं नैवाप्तं नोपपादितम् ॥ २४

सीता — गण्हदु अय्यउत्तो । [ गृह्णात्वार्यपुत्रः ]

रामः — मैथिलि ! किं व्यवसितम् ।

सीता — णं सहधम्मआरिणी क्खु अहं । [ ननु सहधर्मचारिणी खल्वहम् । ]

रामः — मयैकाकिना किल गन्तव्यम् ।

सीता — अतो णु खु अणुगच्छामि । [ अतो नु खल्वनुगच्छामि । ]

रामः — वने खलु वस्तव्यम् ।

सीता — तं खु मे पासादो । [तत् खलु मे प्रासादः । ]

रामः — श्वश्रूश्वशुरशुश्रूषापि च ते निर्वर्तयितव्या ।

सीता — णं उद्दिसिअ देवदाणं पणामो करीअदि । [ एनामुद्दिश्यदेवताभ्यः प्रणामः क्रियते । ]

रामः — लक्ष्मण ! वार्यतामियम् ।

लक्ष्मणः — आर्य नोत्सहे श्लाघनीये काले वारयितुमत्रभवतीम् । कुतः,

अनुचरति शशाङ्कं राहुदोषेऽपि तारा
पतति च वनवृक्षे याति भूमिं लता च ।
त्यजति न च करेणुः पङ्कलग्नं गजेन्द्रं
व्रजतु चरतु धर्मं भर्तृनाथा हि नार्यः ॥ २५

( प्रविश्य )

चेटी — जेदु भट्टिणी । णेवच्छपालिणी अय्यरेवा पणमिअ विण्णवेदि—

ओदादिआए सङ्गीदसालाओ अच्छिन्दिअ वक्कला आणीदा । इमा अवरा अणणुहूदा वक्कला । णिव्वत्तीअदु दाव किल पओअणं त्ति । [जयतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा प्रणम्य विज्ञापयति—अवदातिकया सङ्गीतशालाया आच्छिद्य वल्कला आनीताः । इमेऽपरा अननुभूता वल्कलाः । निर्वर्त्यतां तावत् किल प्रयोजनमिति । ]

रामः — भद्रे ! आनय, संतुष्टैषा । वयमर्थिनः ।

चेटी — गह्णदु भट्टा ( तथा कृत्वा निष्क्रान्ता । ) [ गृह्णातु भर्ता । ]

( रामो गृहीत्वा परिधत्ते । )

लक्ष्मणः — प्रसीदत्वार्यः

निर्योगाद् भूषणान्माल्यात् सर्वेभ्योऽर्धं प्रदाय मे ।
चीरमेकाकिना बद्धं चीरे खल्वसि मत्सरी ॥ २६

रामः — मैथिलि ! वार्यतामयम् ।

सीता — सोमित्ते ! णिवत्तीअदु किल । [ सौमित्रे ! निवर्त्यतां किल । ]

लक्ष्मणः — आर्ये !

गुरोर्मे पादशुश्रूषां त्वमेका कर्तुमिच्छसि ।
तवैव दक्षिणः पादो मम सेव्यो भविष्यति ॥ २७

सीता — दीअदु खु अय्यउत्तो । संतप्पदि सोमित्ती । [ दयतां खल्वार्यपुत्रः । संतप्यते सौमित्रिः । ]

रामः — सौमित्रे ! श्रूयताम् । वल्कलानि नाम,

तपःसंग्रामकवचं नियमद्विरदाङ्कुशः ।
खलीनमिन्द्रियाश्वानां गृह्यतां धर्मसारथिः ॥ २८

लक्ष्मणः — अनुगृहीतोऽस्मि । [ गृहीत्वा परिधत्ते । ]

रामः — श्रुतवृत्तान्तैः पौरैः संनिरुद्धो राजमार्गः । उत्सार्यतामुत्सार्यतां तावत् ।

लक्ष्मणः — आर्य ! अहमग्रतो यास्यामि । उत्सार्यतामुत्सार्यताम् ।

रामः — मैथिली ! अपनीयतामवगुण्ठनम् ।

सीता — जं अय्यउत्तो आणवेदि । ( अपनयति । ) [ यदार्यपुत्र आज्ञापयति । ]

रामः — भो भोः पौराः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

स्वैरं हि पश्यन्तु कलत्रमेतद् बाष्पाकुलाक्षैर्वदनैर्भवन्तः ।
निर्दोषदृश्या हि भवन्ति नार्यो यज्ञे विवाहे व्यसने वने च ॥ २९

( प्रविश्य )

काञ्चुकीयः — कुमार ! न खलु न खलु गन्तव्यम् । एष हि महाराजः,

श्रुत्वा ते वनगमनं वधूसहायं
सौभ्रात्रव्यवसितलक्ष्मणानुयात्रम् ।
उत्थाय क्षितितलरेणुरूषिताङ्गः
कान्तारद्विरद इवोपयाति जीर्णः ॥ ३०

लक्ष्मणः — आर्य !

चीरमात्रोत्तरीयाणां किं दृश्यं वनवासिनाम् ।

रामः —

गतेष्वस्मासु राजा नः शिरःस्थानानि पश्यतु ॥ ३१

( इति निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः ।

———

( ततः प्रविशति कञ्चुकीयः । )

कञ्चुकीयः — भो भोः प्रतिहारव्यापृताः ! स्वेषु स्वेषु स्थानेष्वप्रमत्ता भवन्तु भवन्तः ।

( प्रविश्य )

प्रतिहारी — अय्य किं एदं [ आर्य ! किमेतत् । ]

कञ्चुकीयः — एष हि महाराजः सत्यवचनरक्षणपरं राममरण्यं गच्छन्तमुपावर्तयितुमशक्तः पुत्रविरहशोकाग्निदग्धहृदय उन्मत्त इव बहु प्रलपन् समुद्रगृहके शयानः,

मेरुश्चलन्निव युगक्षयसन्निकर्षे शोषं व्रजन्निव महोदधिरप्रमेयः ।
सूर्यः पतन्निव च मण्डलमात्रलक्ष्यः शोकाद् भृशं शिथिलदेहमतिर्नरेन्द्रः ॥ १

प्रतिहारी — हा हा एव्वंगओ महाराओ । [ हा हा एवंगतो महाराजः । ]

कञ्चुकीयः — भवति ! गच्छ ।

प्रतिहारी — अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

कञ्चुकीयः — ( सर्वतो विलोक्य । ) अहो नु खलु रामनिर्गमनदिनदारभ्य शून्यैवेयमयोध्या संलक्ष्यते । कुतः,

नागेन्द्रा यवसाभिलाषविमुखाः सास्रेक्षणा वाजिनो
हेषाशून्यमुखाः सवृद्धवनिताबालाश्च पौरा जनाः ।
त्यक्ताहारकथाः सुदीनवदनाः क्रन्दत्त्य उच्चैर्दिशा
रामो याति यया सदारसहजस्तामेव पश्यन्त्यमी ॥ २

यावदहमपि महाराजस्य समीपवर्ती भविष्यामि । ( परिक्रम्यावलोक्य ) अये ! अयं महाराजो महादेव्या सुमित्रया च सुदुःसहमपि पुत्रविरहसमुद्भवं शोकं निगृह्यात्मानमेव संस्थापयन्तीभ्यामन्वास्यमानस्तिष्ठति । कष्टा खल्ववस्था वर्तते । एष एष महाराजः,

पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्वहः ॥ ३

( निष्क्रान्तः । )

## इति मिश्रविष्कम्भकः

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति यथानिर्दिष्टो राजा देव्यौ च । )

राजा

हा वत्स ! राम ! जगतां नयनाभिराम !
हा वत्स ! लक्ष्मण ! सुलक्षणसर्वगात्र ! ।
हा साध्वि ! मैथिलि ! पतिस्थितचित्तवृत्ते !
हा हा गताः किल वनं बत मे तनूजाः ॥ ४

चित्रमिदं भोः ! यद् भ्रातृस्नेहात् पितरि विमुक्तस्नेहमपि तावल्लक्ष्मणं द्रष्टुमिच्छामि । वधु वैदेहि

रामेणापि परित्यक्तो लक्ष्मणेन च गर्हितः ।
अयशोभाजनं लोके परित्यक्तस्त्वयाप्यहम् ॥ ५

पुत्र राम ! वत्स लक्ष्मण ! वधु वैदेहि । प्रयच्छत मे प्रतिवचनं पुत्रकाः ! शून्यमिदं भोः । न मे कश्चित् प्रतिवचनं प्रयच्छति । कौसल्यामातः क्वासि ।

सत्यसन्ध ! जितक्रोध ! विमत्सर ! जगत्प्रिय !
गुरुशुश्रूषणे युक्त ! प्रतिवाक्यं प्रयच्छ मे ॥ ६

हा क्वासौ सर्वजनहृदयनयनाभिरामो रामः. क्वासौ मयि गुर्वनुवृत्तिः । क्वासो शोकार्तेष्वनुकम्पा । क्वासौ तृणवदगणितराज्यैश्वर्यः । पुत्र ! राम ! वृद्धं पितरं मां परित्यज्य किमसम्बद्धेन धर्मेण ते कृत्यम् । हा धिक् ! कष्टं भोः !

सूर्य इव गतो रामः सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।
सूर्यदिवसावसावसाने छायेव न दृश्यते सीता ॥ ७ ॥

( ऊर्ध्वमवलोक्य । ) भोः कृतान्तहतक !

अनपत्या वयं रामः पुत्रोऽन्यस्य महीपतेः ।
वने व्याघ्री च कैकेयी त्वया किं न कृतं त्रयम् ॥ ८

कौसल्या — ( सरुदितम् ) अलं दाणि महाराओ अदिमत्तं सन्तप्पिअ परवसं अत्ताणं कादुं । णं सा ते अ कुमारा महाराअस्स समआवसाणे पेक्खिदव्वा भविस्सन्ति । [ अलमिदानीं महाराजोऽतिमात्रं सन्तप्य परवशमात्मानं कर्तुम् । ननु सा तौ च कुमारौ महाराजस्य समयावसाने प्रेक्षितव्या भविष्यन्ति । ]

राजा — का त्वं भोः !

कौसल्या — असिणिद्धपुत्तप्पसविणी खु अहं । [ अस्निग्धपुत्रप्रसविनी खल्वहम् । ]

राजा — किं किं सर्वजनहृदयनयनाभिरामस्य रामस्य जननी त्वमसि कौसल्या ।

कौसल्या — महाराअ ! सा एव मन्दभाइणी खु अहं । [ महाराज ! सैव मन्दभागिनी खल्वहम् । ]

राजा — कौसल्ये सारवती खल्वसि । त्वया हि खलु रामो गर्भे धृतः ।

अहं हि दुःखमत्यन्तमसह्यं ज्वलनोपमम् ।
नैव सोढुं न संहर्तुं शक्नोमि मुषितेन्द्रियः ॥ ९

( सुमित्रां विलोक्य ) इयमपरा का ।

कौसल्या — महाराअ ! वच्छलक्खण–। ( इत्यर्धोक्ते ) [ महाराज ! वत्सलक्ष्मण–। ]

राजा — ( सहसोत्थाय– ) क्वासौ क्वासौ लक्ष्मणः । दृश्यते । भोः कष्टम् ।

( देव्यौ ससंभ्रममुत्थाय राजानमवलम्बेते । )

कौसल्या — महाराअ ! वच्छलक्खणस्स जणणीं सुमित्तत्ति वत्तुं मए उवक्कन्दं । [ महाराज ! वत्सलक्ष्मणस्य जननी सुमित्रेति वक्तुं मयोपक्रान्तम् । ]

राजा — अयि सुमित्रे !

तवैव पुत्रः सत्पुत्रो येन नक्तन्दिवं वने ।
रामो रघुकुलश्रेष्ठश्छाययेवानुगम्यते ॥ १०

( प्रविश्य )

कञ्चुकीयः — जयतु महाराजः । एष खलु तत्रभवान् सुमन्त्रः प्राप्तः ।

राजा — ( सहसोत्थाय सहर्षम् । ) अपि रामेण ।

कञ्चुकीयः — न खलु, रथेन ।

राजा — कथं कथं रथेन केवलेन । ( इति मूर्च्छितः पतति । )

देव्यौ — महाराअ ! समस्ससिहि समस्ससिहि । ( गात्राणि परामृशतः । ) [ महाराज ! समाश्वसिहि समाश्वसिहि ! ]

कञ्चुकीयः — भोः । कष्टम् । ईदृग्विधाः पुरुषविशेषा ईदृशीमापदं प्राप्नुवन्तीति विधिरनतिक्रमणीयः । महाराज ! समाश्वसिहि समाश्वसिहि ।

राजा — ( किञ्चित् समाश्वस्य । ) बालाके ! सुमन्त्र एक एव ननु प्राप्तः ।

कञ्चुकीयः — महाराज ! अथ किम् ।

राजा — कष्टं भोः !

विदूषकः — ण खु वसन्तसेणा, वसन्तसेणो पत्तो। [ न खलु वसन्तसेना, वसन्तसेनः प्राप्तः ]

नायकः -- रदनिके ! किमेतत् ।

चेटी -- भट्टदारअ ! अम्हाणं रुक्खआडिआपक्खदुवारे सन्धि छिन्दिअ चोरो पविट्ठो। [ भर्तृदारक ! अस्माकं वृक्षवाटिकापक्षद्वारे संधि छित्वा चोरः प्रविष्टः । ]

नायकः -- किं चोरः प्रविष्टः ।

विदूषकः — भो वअस्स ! सव्वहा तुवं भणासि, मुक्खो मेत्तेओ अपंडिदो मेत्तेओ त्ति णं मए सोभणं किदं तं सुवणभंडअं तव हत्थे समप्पअन्तेण। [ भो वयस्य ! सर्वथा त्वं भणसि, मूर्खो मैत्रेयोऽपण्डितो मैत्रेय इति ननु मया शोभनं कृतं तत् सुवर्णभाण्डकं तव हस्ते समर्पयता । ]

नायकः — किं भवता दत्तम् ।

विदूषकः — अह इं । [ अथकिम् । ]

नायकः — कस्यां वेलायाम् ।

विदूषकः — अद्धरत्ते । [ अर्द्धरात्रे । ]

नायकः — किमर्धं.रात्रे । बाढं दत्तम् ।

विदूषकः — भो चारुदत्त । जं वेलं पडिवुद्धो आसि, तस्सिं वेलाअं खु दिण्णं। [ भोश्चारुदत्त ! यस्यां वेलायां प्रतिबुद्ध आसीः, तस्यां वेलायां खलु दत्तम् । ]

नायकः — हन्त हृतं सुवर्णभाण्डकम् ।

विदूषः —दाणिं मे हत्थे पडिच्छिदु अत्तभवं। [ इदानीं मम हस्ते प्रतीच्छत्वत्रभवान् ]

नायकः — ( आत्मगतम् )

कः श्रद्धास्यति भूतार्थं सर्वं मां तुलयिष्यति ।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता ॥ १५ ॥

( प्रविश्य )

ब्राह्मणी — रदणिए ! रदणिए ! आअच्छ। णहि सुणादि। कवाडसद्दं दाव करिस्सं। ( तथा करोति । ) [ रदनिके ! रदनिके ! आगच्छ । नहि शृणोति । कवाटशब्दं तावत् करिष्यामि । ]

चेटी — हं, कवाडसद्दो विअ। भट्टिदारिआ मं सद्दावेदि। ( परिक्रम्य ) भट्टिदारिए ! इअ म्हि । [ हं, कवाटशब्द इव । भर्तृदारिका मां शब्दापयति । भर्तृदारिके ! इयमस्मि । ]

ब्राह्मणी — ण परिक्खदो ण वावादिदो अय्यउत्तो अय्यमेत्तेओ वा । [ न परिक्षतो न व्यापादित आर्यपुत्र आर्यमैत्रेयो वा । ]

चेटी—कुसली भट्टिदारओ अय्यमेत्तेओ अ। जो तस्स जणस्स अलङ्कारो चोरेण गहीदो। [ कुशली भर्तृदारक आर्यमैत्रेयश्च। यस्तस्य जनस्यालङ्कारश्चोरेण गृहीतः। ]

ब्राह्मणी—किं भणासि चोरेण गहीद त्ति। [ किं भणसि चोरेण गृहीत इति। ]

चेटी—अह इं। [ अथ किं। ]

ब्राह्मणी—किणु खु तस्स जणस्स दादव्वं भविस्सदि। अहव एदं दइस्सं। ( कर्णौ स्पृष्ट्वा ) हृद्धि तालीपत्तं खु एदं। सो दाणि परिअओ मं विडम्बेदि। किं दाणि करिस्सं। ( विचिन्त्य ) भोदु, दिट्ठं। मम ञादिकुलादो लद्धा सदसहस्समुल्ला मुत्तावली। तं पि अय्यउत्तो सोण्डीरदाएण पडिच्छदि। भोदु, एवं दाव करिस्सं। ( निष्क्रान्ता ) [ किन्नु खलु तस्मै जनाय दातव्यं भविष्यति। अथवैतद् दास्यामि। हा धिक् तालीपत्रं खल्वेतत्। स इदानीं परिचयो मां विडम्बयति। किमिदानीं करिष्यामि। भवतु, दृष्टम्। मम ज्ञातिकुलाद् लब्धा शतसहस्रमूल्या मुक्तावली। तामप्यार्यपुत्रः शौण्डीरतया न प्रतीच्छति। भवतु, एवं तावत् करिष्यामि। ]

विदूषकः—इमस्स अन्धआरुप्पादिदस्स अवराहस्स किदे भवन्तं सीसेण पसादेमि। दाणिं मे हत्थे पडिच्छदु अत्तभवं। [ अस्यान्धकारोत्पादितस्यापराधस्य कृते भवन्तं शीर्षेण प्रसादयामि। इदानीं मे हस्ते प्रतीष्यत्वत्रभवान्। ]

नायकः—किं भवानिदानीं मां बाधते।

भवांस्तावदविश्वासी शीलज्ञो मम नित्यशः।
किं पुनः स कलाजीवी वञ्चनापण्डितो जनः॥ १६

विदूषकः—मण्णे मए मन्दभग्गेण कुम्भीलस्स हत्थे दिण्णं। ( विषण्णस्तिष्ठति। ) [ मन्ये मया मन्दभाग्येन कुम्भीलस्य हस्ते दत्तम्। ]

( प्रविश्य )

ब्राह्मणी—रदणिए! अय्यमेत्तेअं सद्दावेहि। [ रदनिके! आर्यमैत्रेयं शब्दापय। ]

चेटी—अय्यमेत्तेअ! भट्टिदारिआ तुमं सद्दावेदि। [ आर्यमैत्रेय! भर्तृदारिका त्वां शब्दापयति। ]

विदूषकः—भोदि! किं मं। [ भवति! किं माम्। ]

चेटी—आम। [ आम्। ]

विदूषकः—एस आअच्छामि। ( उपसर्पति। ) [ एष आगच्छामि। ]

ब्राह्मणी—अय्यमेत्तेअ! इमं पडिग्गहं पडिगण्ह। [ आर्यमैत्रेय! इमं प्रतिग्रहं प्रतिगृहाण। ]

विदूषकः—अवत्थाविरुद्धो खु अअं पदाणविभवो। कुदो एदस्स आगमो।
[ अवस्थाविरुद्धः खल्वयं प्रदानविभवः। कुत एतस्यागमः। ]

ब्राह्मणी—णं सट्ठिं उववसामि। सव्वसारविभवेण बम्हणेण सोत्थि वाअइदव्वं ति एसो इमस्स आगमो। [ ननु षष्ठीमुपवसामि। सर्वसारविभवेन ब्राह्मणेन स्वस्ति वाचयितव्यमित्येषोऽस्यागमः। ]

विदूषकः—अट्ठमी खु अज्ज। [ अष्टमी खल्वद्य। ]

ब्राह्मणी—पमादादो अदिक्कमो किदो। अज्ज पूआ णिव्वत्तीअदि। [ प्रमादाद् अतिक्रमः कृतः। अद्य पूजा निर्वर्त्यते। ]

विदूषकः—अणणुरूवदाए पदाणस्स अणुक्कोसो विअ पडिभादि। ( जनान्तिकम् ) रदणिए! किं करिस्सं। [ अननुरूपतया प्रदानस्यानुक्रोश इव प्रतिभाति। रदनिके! किं करिष्यामि। ]

चेटी—( अपवार्य ) किंणु खु तस्स जणस्स दादव्वं भविस्सदि त्ति एदण्णिमित्तं भट्टिदारओ सन्तप्पदि ति भट्टिदारिआ तव हत्थे दइअ अय्यउत्तं अणिरिणं करिस्सामि त्ति एवं करेदि। ता गण्ह एदं। [ किन्नु खलु तस्मै जनाय दातव्यं भविष्यतीत्येतन्निमित्तं भर्तृदारकः संतप्यत इति भर्तृदारिका तव हस्ते दत्वार्य-पुत्रमनृणं करिष्यामीत्येवं करोति। तद् गृहाणैतत्। ]

ब्राह्मणी—उदअसम्भवदाए मुत्तावलीए तव अ दुलल्हदाए उवआरो बिस्सरिदो। गण्ह एदं। ( ददाति। ) [ उदकसम्भवतया मुक्तावल्यास्तव च दुर्लभतयोपचारो विस्मृतः। गृहाणैतत्। ]

विदूषकः—( गृहीत्वा ) सव्वं दाव चिट्ठदु। रोदिदीविअ होदीए दिट्ठी। [ सर्वं तावत् तिष्ठतु। रोदितीव भवत्या दृष्टिः। ]

ब्राह्मणी—देवउलधूमेण रोदाविदा। [ देवकुलधूमेन रोदिता। ]

विदूषकः—साविदासि तत्तहोदा चारुदत्तेण, जइ अलिअं भणासि। [ शापितासि तत्रभवता चारुदत्तेन, यद्यलीकं भणसि। ]

ब्राह्मणी—हद्धि। ( निष्क्रान्ता। ) [ हा धिक्। ]

विदूषकः—एसा वाआए दुक्खं रक्खिअ अस्सूहिं सूइअ गआ। ( उपगम्य ) भो! इदं। [ एषा वाचा दुःखं रक्षित्वाश्रुभिः सूचयित्वा गता। भोः! इदम्। ]

नायकः—किमेतत्।

विदूषकः—सरिसकुलदारसङ्गहस्स फलं। [ सदृशकुलदारसंग्रहस्य फलम्। ]

नायकः—किं ब्राह्मणी मामनुकम्पते।

विदूषकः—एवं विअ। [ एवमिव। ]

नायकः—धिगात्मानम्। अद्य हतोऽस्मि।

मयि द्रव्यक्षयक्षीणे स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ १७

विदूषकः —तत्तहोदी हिअएण तुमं याचेदि । अहं सीसेण याचेमि । गण्ह एदं ।
[ तत्रभवती हृदयेन त्वां याचते । अहं शीर्षेण याचे । गृहाणैतत् । ]

नायकः —तथा । ( गृहीत्वा ) वयस्य ! इमां मुक्तावलीं गृहीत्वा वसन्तसेनायाः सकाशं गच्छ ।

अर्थेषु काममुपलभ्य मनोरथो मे
स्त्रीणां धनेष्वनुचितं प्रणयं करोति ।
माने च कार्यकरणे च विलम्बमानो
धिग् भोः ! कुलं च पुरुषस्य दरिद्रतां च ॥ १८

विदूषकः —अहो अप्पमुल्लस्स सुवण्णभण्डअस्स किदे सदसहस्समुल्ला मुत्तावली
[अहो अल्पमूल्यस्य सुवर्णभाण्डकस्य कृते शतसहस्रमूल्या मुक्तावली निर्यातयितव्या ।]

नायकः —वयस्य ! मा मैवम् ।

यं समालक्ष्य विश्वासं न्यासोऽस्मासु कृतस्तया ।
तस्यैतन्महतो मूल्यं प्रत्ययस्य प्रदीयताम् ॥ १९

( निष्क्रान्ताः सर्वे । )

इति तृतीयोऽङ्कः ।

# अथ चतुर्थोऽङ्कः

( ततः प्रविशति सोत्कण्ठा वसन्तसेना, चित्रफलकमादाय वर्तिकाकरण्डहस्ता चेटी च । )

गणिका—हञ्जे ! पेक्खसि सरिसो तस्स जणस्स । [ हञ्जे ! प्रेक्षसे सदृशस्तस्य जनस्य । ]

चेटी—अज्जुए ! तस्सिं हत्थिविमद्दकोलाहले बहुमाणपय्यत्थाए दिट्ठीए दूरदो दिट्ठो सो भट्टिदारओ ईदिसो एव्व । [ अज्जुके ! तस्मिन् हस्तिविमर्दकोलाहले बहुमानपर्यस्तया दृष्ट्या दूरतो दृष्टः स भर्तृदारक ईदृश एव । ]

गणिका—तुमं दाव दक्खो वेसवासजणो त्ति जणवादं पूरअन्ती अलिअं भणासि । [ त्वं तावद् दक्षो वेशवासजन इति जनवादं पूरयन्त्यलीकं भणसि । ]

चेटी—किं एदं वेसवासजणो सव्वो दक्खिणो होइ त्ति । पेक्खदु अज्जुआ चम्पआरामे पिचुमन्दा जाअन्ति । अदिसरिस त्ति मम हिअअं अहिरमदि । परमत्थदो एव्व पसंसीअदि, णं कामदेवो । [ किमेतद् वेशवासजनः सर्वो दक्षिणो भवतीति । प्रेक्षतामज्जुका चम्पकारामे पिचुमन्दा जायन्ते । अतिसदृश इति मम हृदयमभिरमते । परमार्थत एव प्रशस्यते, ननु कामदेवः । ]

गणिका—हञ्जे ! सहीजणेण अवहसणीअत्तणं अत्तणो परिहरामि । [ हञ्जे ! सखीजनेनापहसनीयत्वमात्मनः परिहरामि । ]

चेटी—एदं जुज्जइ । सहीजणसपत्तिओ गणिआजणो णाम । [ एतद् युज्यते । सखीजनसपत्नीको गणिकाजनो नाम । ]

( ततः प्रविशत्याभरणहस्तापरा चेटी । )

चेटी—सुहं अज्जुआए । [ सुखमज्जुकायाः । ]

गणिका—हञ्जे ! साअदं दे । [ हञ्जे ! स्वागतं ते । ]

चेटी—अज्जुए ! अत्ता आणवेदि—इदं दुवारं पविट्ठं पोक्खरं उवावत्तिदं पवहणं । ता तुवरमाणमण्डणा गहीदावउण्ठणा आअच्छदु त्ति । इह अलङ्कारं अलङ्करेदु अज्जुआ । [ अज्जुके ! अम्बाज्ञापयति—इदं द्वारं प्रविष्टं पुष्करमुपावर्तितं प्रवहणम् । तत् त्वरमाणमण्डना गृहीतावगुण्ठनागच्छत्विति । इहालङ्कारम् । अलङ्करोत्वज्जुका । ]

गणिका—किं अय्यचारुदत्तो मण्डइस्सिदि । [ किमार्यचारुदत्तो मण्डयिष्यति । ]

चेटी—णहि, जेण अलङ्कारो पेसिदो सो राअसालो सण्ठाणो । [ नहि, येनालङ्कारः प्रेषितः स राजश्यालः संस्थानः । ]

गणिका—अवेहि अविणीदे। [ अपेह्यविनीते। ]

चेटी—पसीददु पसीददु अज्जुआ। सन्देसं खु अहं मन्तेमि। ( पादयोः पतति। )
[ प्रसीदतु प्रसीदत्वज्जुका। सन्देशं खल्वहं मन्त्रयामि। ]

गणिका—उट्ठेहि उट्ठेहि। कुसन्देसं असूआमि, ण तुवं। [ उत्तिष्ठोत्तिष्ठ। कुसन्देशायासूयामि, न तुभ्यम्। ]

चेटी—किं अहं अत्तं भणामि। [ किमहमम्बां भणामि। ]

गणिका—भणेहि अत्तं—जदा अय्यचारुदत्तो अभिसारइदव्वो तदा मण्डेमि त्ति।
[ भणाम्बां—यदार्यचारुदत्तोऽभिसारयितव्यस्तदा मण्डयामीति। ]

चेटी—तह (निष्क्रान्ता।) [ तथा। ]

( ततः प्रविशति सज्जलकः। )

सज्जलकः—कृत्वा निशायां वचनीयदोषं निद्रां च हित्वा तिमिरं भयं च।
स एव सूर्योदयमन्दवीर्यः शनैर्दिवाचन्द्र इवास्मि भीतः॥ १

दिष्ट्या कर्मान्ते प्रभातम्। यावदिदानीं वसन्तसेनायाः परिचारिकाया मदनिकाया निष्क्रयार्थं मयेदं कृतम्। ( परिक्रम्य ) इदं वसन्तसेनाया गृहम्। यावत् प्रविशामि। ( प्रविश्य ) किन्नु खल्वभ्यन्तरस्था मदनिका। अथवा, पूर्वाह्णे गणिकानामभ्यन्तरे सान्निध्यम्। अतस्तत्रैव तया भवितव्यम्। यावच्छब्दापयामि। मदनिके! मदनिके!।

चेटी—( आकर्ण्य ) सज्जलअस्स विअ सरो। वावुदा अज्जुआ। ता उवसप्पिस्सं। ( उपगम्य ) इअम्हि। [ सज्जलकस्येव स्वरः। व्यापृताज्जुका। तदुपसर्पिष्यामि। इयमस्मि। ]

सज्जलकः—इतस्तावत्।

चेटी—किं तुवं सङ्किदवण्णो विअ। [ किं त्वं शङ्कितवर्ण इव। ]

सज्जलकः—न खलु, किञ्चित् कथयितुकामः।

गणिका—हञ्जे इमं चित्तफलअं सअणीए ठावेहि। ( विलोक्य ) कहिं गआ हदासा। अहव अदूरगआए होदव्वं। जाव णं पेक्खिस्सं। ( परिक्रम्यावलोक्य ) अम्मो इअं सा अदिसिणिद्धाए दिट्ठीए केण वि मणुस्सेण पिबन्ती विअ सह मन्तअन्ती चिट्ठइ। तक्केमि एसो जो कोवि कएण मं याचेदि। [ हञ्जे! इदं चित्रफलकं शयनीये स्थापय। कुत्र गता हताशा। अथवा अदूरगतया भवितव्यम्। यावदेनां प्रेक्षिष्ये। अम्मो इयं सातिस्निग्धया दृष्ट्या केनापि मनुष्येण पिबन्तीव सह मन्त्रयमाणा तिष्ठति। तर्कयाम्येष यः कोऽपि क्रयेण मां याचते। ]

सज्जलकः—श्रूयतां रहस्यम्।

गणिका—अजुत्तं पररहस्सं सोदुं, अहं गमिस्सं। [ अयुक्तं पररहस्यं श्रोतुम्, अहं गमिष्यामि । ]

सज्जलकः —अपि वसन्तसेना ( इत्यर्धोक्ते )।

गणिका—अहं अहिइदा एदाअं कहाअं। होदु, सुणिस्सं दाव भविस्सदि। ( पुनः प्रतिनिवृत्य स्थिता । ) [ अहमधिकृतैतस्यां कथायाम्। भवतु, श्रोष्यामि तावद् भविष्यति । ]

सज्जलकः —किं दास्यति त्वां निष्क्रयेण।

गणिका—सो एव्व एसो। होदु, सुणिस्सं। [ स एवैषः। भवतु, श्रोष्यामि । ]

चेटी—सज्जलअ! मम पदाणं पुढमं एव अज्जुआए उत्तं। [ सज्जलक! मम प्रदानं प्रथममेवाज्जुकयोक्तम् । ]

सज्जलकः —तेन हीममस्यै प्रयच्छ, एवं वक्तव्या च—

अयं तव शरीरस्य प्रमाणादिव निर्मितः।
अप्रकाश्यो ह्यलङ्कारो मत्स्नेहाद् धार्यतामिति ॥ २

चेटी—पेक्खामि दाव। [ प्रेक्षे तावत् । ]

सज्जलकः —गृह्यताम्। ( दर्शयति । )

चेटी—दिट्ठपुरुवो विअ अअं अलङ्कारो। [ दृष्टपूर्व इवायमलङ्कारः । ]

गणिका—ममकेरको विअ अअं अलङ्कारो। [ मदीय इवायमलङ्कारः । ]

चेटी—भणाहि भणाहि। को इमस्स आअमो। [ भण भण। कोऽस्यागमः । ]

सज्जलकः —त्वत्स्नेहात् साहसं कृतम्।

उभे—हं, साहसिओ। [ हं साहसिकः । ]

चेटी—( आत्मगतम् ) आ, अज्जुआए खु इमस्स आइदी कम्मदारुणदाए उव्वेअणीआ संवुत्ता। ( प्रकाशम् ) हद्धि मम किदे उभअं संवुत्तं—तव सरीरं चारित्तं च। [ आ, अज्जुकायाः खल्वस्याकृतिः कर्मदारुणतयोद्वेजनीया संवृत्ता। हा धिग् मम कृते उभयं सशयितं संवृत्तं—तव शरीरं चारित्रं च । ]

सज्जलकः—उन्मत्तिके। साहसे खलु श्रीर्वसति।

चेटी—अपण्डिदो खु सि। को हि णाम जीविदेण सरीरं विक्कीणिस्सदि अह कस्स गेहे इअं विस्सासवञ्चणा किदा। [ अपण्डितः खल्वसि। को हि नाम जीवितेन शरीरं विक्रेष्यति। अथ कस्य गेहे इयं विश्वासवञ्चना कृता। ]

सज्जलकः —यथा प्रभाते मया श्रुतं—श्रेष्ठिचत्वरे प्रतिवसति सार्थवाहपुत्रश्चारुदत्तो नाम।

उभे—हुम्।

सज्जलकः —अयि,

विषादस्त्रस्तसर्वाङ्गी सम्भ्रमोत्फुल्ललोचना ।
मृगीव शरविद्धाङ्गी कम्पसे नानुकम्पसे ॥ ३

चेटी—सच्चं भणाहि । सत्थवाहकुले साहसं करन्तेण तुए कोच्चि कुलवुत्तो सत्थेण अत्थि परिक्खदो वावादिदो वा । [ सत्यं भण । सार्थवाहकुले साहसं कुर्वता त्वया कश्चित् कुलपुत्रः शस्त्रेणास्ति परिक्षतो व्यापादितो वा । ]

गणिका—सुट्ठु, मए वि पुच्छिदव्वं एदाए पुच्छिदं । [ सुष्ठु, मयापि प्रष्टव्यमेतया पृष्टम् । ]

सज्जलकः—मदनिके ! एतावत् किं न पर्याप्तं, द्वितीयमप्यकार्यं करिष्यामि । न खल्वत्र शस्त्रेण कश्चित् परिक्षतो वा ।

चेटी—सज्जलअ ! सच्चं । [ सज्जलक ! सत्यम् । ]

सज्जलकः—सत्यम् ।

चेटी—साहु सज्जलअ ! पिअं मे । [ साधु सज्जलक ! प्रियं मे । ]

सज्जलकः—किं किं प्रियमित्याह । ईदृशं मदनिके !

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं सन्तुष्टपूर्वपुरुषेऽपि कुले प्रसूतः ।
रक्षामि मन्मथगृहीतमिदं शरीरं मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ४

चेटी—सज्जलअ ! सुणाहि । अज्जुआए अअं अलङ्कारो ( कर्णे । ) एवं विअ । [ सज्जलक ! शृणु । अज्जुकाया अयमलङ्कारः । एवमिव । ]

सज्जलकः—एवम् ।

अज्ञानाद् या मया पूर्वं शाखा पत्रैर्वियोजिता ।
छायार्थी ग्रीष्मसन्तप्तस्तामेव पुनराश्रितः ॥ ५

गणिका—सन्तप्पदि त्ति तक्केमि एदेण अकय्यं किदं ति । [ संतप्यत इति तर्कयामि एतेनाकार्यं कृतमिति । ]

सज्जलकः—मदनिके ! एवं गते किं कर्तव्यम् ।

चेटी—तहिं एव णिय्यादेहि । णहि मण्डइस्सदि अज्जुआ । [ तत्रैव निर्यातय । नहि मण्डयिष्यत्यज्जुका । ]

सज्जलकः—अथेदानीं सोऽमर्षान्मां चोर इति रक्षिपुरुषैर्ग्राहयिष्यति चेदत्र किं करिष्यामि ।

चेटी—मा भाआहि । कुलवुत्तो खु सो गुणाणं परितुस्सदि । [ मा बिभीहि । कुलपुत्रः खलु स गुणैः परितुष्यति । ]

गणिका—साहु भद्दे ! अवत्तव्वासि, अलङ्किदा विअ एदेण वअणेण । [ साधु भद्रे ! अवक्तव्यासि, अलङ्कृतेवैतेन वचनेन । ]

सज्जलकः—सर्वथा न शक्ष्याम्यहं तत्र गन्तुम् ।

चेटी—अअं अण्णो उवाओ । [ अयमन्य उपायः । ]

गणिका—एदे गुणा वेसवासस्य । [ एते गुणा वेशवासस्य । ]

सज्जलकः —कोऽन्य उपायः ।

चेटी—णं तव रूपञ्ञा अज्जुआ अवि सत्थवाहपुत्तो अ । [ननु तव रूपज्ञा अज्जुकापि सार्थवाहपुत्रश्च । ]

सज्जलकः —न खलु ।

चेटी—तेण हि इमं दाव अलङ्कारं तस्स सत्थवाहपुत्तस्स वअणादो अज्जुआए णिय्यादेहि । एवं च किदे तुवं रक्खिदो, सो अय्यो अ अणिव्विण्णो भविस्सदि । अहं च पीडिदा ण भविस्सं । आदु अज्जुअं च पुणो वञ्चिअ पुणो एव्व दासभावो भवे । तेन हीमं तावदलङ्कारं तस्य सार्थवाहपुत्रस्य वचनादज्जुकायै निर्यातय । एवं च कृते त्वं रक्षितः, स आर्यश्चानिर्विण्णो भविष्यति । अहं च पीडिता न भविष्यामि । अथवा अज्जुकां च पुनर्वञ्चयित्वा पुनरेव दासभावो भवेत् । ]

सज्जलकः —मदनिके ! प्रीतोऽस्मि ।

गणिका—भोदु, अब्भन्तरं पविसिअ उवविसामि । ( तथा करोति । ) [भवत्वभ्यन्तरं प्रविश्योपविशामि । ]

चेटी—सज्जलअ ! आअच्छ, कामदेवउले मं पडिवालेहि । अहं ओसरं जाणिअ अज्जुआए णिवेदेभि । [ सज्जलक ! आगच्छ, कामदेवकुले मां प्रतिपालय । अहमवसरं ज्ञात्वाज्जुकायै निवेदयामि । ]

सज्जलकः —बाढम् । ( निष्क्रान्तः । )

( ततः प्रविशत्यपरा चेटी । )

चेटी—सुहं अज्जुआए । एसो सत्थवाहपुत्तस्स सआसादो कोच्चिच बम्हणो आअदो अज्जुअं पेक्खिदुं । [ सुखमज्जुकायाः । एष सार्थवाहपुत्रस्य सकाशात् कश्चिद् ब्राह्मण आगतोऽज्जुकां प्रेक्षितुम् । ]

गणिका—( सादरम् ) गच्छ, सिग्घं पवेसेहि णं । [ गच्छ, शीघ्रं प्रवेशयैनम् । ]

चेटी—तह । ( उपसृत्य ) एदु एदु अय्यो । [ तथा । एत्वेत्वार्यः । ]

( प्रविश्य )

विदूषकः —( सर्वतो विलोक्य ) अहो गणिआवाडस्स सस्सिरीअदा । णाणापट्टणसंमागदेहि आअमिएहि पुत्थआ वाईअन्ति । संओजअन्ति अ आहारप्पआराणि । वीणा वादीअन्ति । सुवण्णआरा अलङ्कारप्पआराणि आदरेण जोजअन्ति । [ अहो गणिकावाटस्य सश्रीकता । नानापट्टणसमागतैरागमिकैः पुस्तकानि वाच्यन्ते । संयोज्यन्ते चाहारप्रकाराः । वीणा वाद्यन्ते । सुवर्णकारा अलङ्कारप्रकारानादरेण योजयन्ति । ]

चेटी—एसा अज्जुआ । उवसप्पदु अय्यो । [ एषाज्जुका । उपसर्पत्वार्यः ]

विदूषकः —( उपगम्य ) सोत्थि होदीए । [ स्वस्ति भवत्यै । ]

गणिका—आअदं अय्यस्स । हञ्जे ! आसणं अय्यस्स, पादोदअं च । [ स्वागतमार्यस्य । हञ्जे ! आसनमार्यस्य, पादोदकं च । ]

विदूषकः —( आत्मगतम् ) सव्वं आणेदु वज्जिअ भोअणं । [ सर्वमानयतु वर्जयित्वा भोजनम् । ]

चेटी—जं अज्जुआ आणवेदि । ( आसनं ददाति पादोदकं च । ) उवविसदु अय्यो । [ यदज्जुकाज्ञापयति । उपविशत्वार्यः । ]

विदूषकः —( उपविश्य ) पडिच्छदु आसणं भोदी । अहं किञ्चि भणिदुं आअदो । [ प्रतीच्छत्वासनं भवती । अहं किञ्चिद् भणितुमागतः । ]

गणिका—( उपविश्य ) अवहिदम्हि । [ अवहितास्मि । ]

विदूषकः —केत्तिअमत्तं खु तस्स अलङ्कारस्स मुल्लप्पमाणं । [ कियन्मात्रं खलु तस्यालङ्कारस्य मूल्यप्रमाणम् । ]

गणिका—किणिमित्तं खु अय्यो पुच्छदि । [ किन्निमित्तं खल्वार्यः पृच्छति । ]

विदूषकः —सुणादु भोदी । तत्तहोदो चारुदत्तस्स गुणप्पच्चाअणणिमित्तं खु तुए अलङ्कारो तहिं णिक्खित्तो । सो तेण जूदे हारिदो । [ शृणोतु भवती । तत्रभवतश्चारुदत्तस्य गुणप्रत्यायननिमित्तं खलु त्वयालङ्कारस्तस्मिन् निक्षिप्तः । स तेन द्यूते हारितः । ]

गणिका—जूदे । जुज्जइ । तदो तदो । [ द्यूते । युज्यते । ततस्ततः । ]

विदूषकः —तदो तस्स अलङ्कारस्स मुल्लभूदं इमं मुत्तावलिं पडिच्छदु भोदी । [ ततस्तस्यालङ्कारस्य मूल्यभूतामिमां मुक्तावलीं प्रतीच्छतु भवती । ]

गणिका—( आत्मगतम् ) धि क्खु गणिआभावं । लुद्धत्ति मं तुलअदि । जइ ण पडिच्छे, सो एव्व दोसो भविस्सदि । ( प्रकाशम् ) आणेदु अय्यो । [ धिक् खलु गणिकाभावम् । लुब्धेति मां तुलयति । यदि न प्रतीच्छामि, स एव दोषो भविष्यति । आनयत्वार्यः । ]

विदूषकः —इदं गण्हदु भोदी । [ इदं गृह्णातु भवती । ]

गणिका—( गृहीत्वा ) पडिच्छिदं तए त्ति अय्यो णिवेदेदु । [ प्रतीष्टं तयेत्यार्यो निवेदयतु । ]

विदूषकः —( आत्मगतम् ) कोवि उवआरो वि ण एदाए भणिदो । ( प्रकाशम् ) एवं होदु । ( दत्त्वा निष्क्रान्तः । ) [ कोऽप्युपचारोऽपि नैतया भणितः । एवं भवतु । ]

गणिका—साहु । भाअधेअपरिवुत्तदाए दसाए माणावमाणं रक्खिदं [ साधु चारुदत्त ! साधु । भागधेयपरिवृत्ततायां दशायां मानावमानं रक्षितम् । ]

( प्रविश्य )

मदनिका—अज्जुए ! सत्थवाहपुत्तस्स सआसादो कोच्चि मणुस्सो आअदो इच्छइ अज्जुअं पेक्खिउं । [ अज्जुके ! सार्थवाहपुत्रस्य सकाशात् कश्चिद् मनुष्य आगत इच्छत्यज्जुकां द्रष्टुम् । ]

गणिका—किं दिट्ठपुरुवो णवदंसणो वा । [ किं दृष्टपूर्वो नवदर्शनो वा । ] !

मदनिका—अज्जुए ! णहि, तस्सकेरओ त्ति मे पडीभादि । [ अज्जुके ! नहि, तदीय इति मे प्रतिभाति । ]

गणिका—गच्छ, पवेसेहि णं । [ गच्छ, प्रवेशयैनम् । ]

मदनिसा—तह । ( निष्क्रान्ता । ) [ तथा । ]

गणिका—अहो रमणिज्जदा अज्ज दिवसस्स । [ अहो रमणीयताद्य दिवसस्य । ]

( ततः प्रविशति मदनिका सज्जलकेन सह । )

सज्जलकः—कष्टा खल्वात्मशङ्का नाम,

यः कश्चिच्चकितगतिर्निरीक्षते मां सम्भ्रान्तो द्रुतमुपसर्पति स्थितो वा ।
सर्वांस्तांस्तुलयति दोषतो मनो मे स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ ६

मदनिका—एसा अज्जुआ । उवसप्पदु अय्यो । [ एषाज्जुका । उपसर्पत्वार्यः । ]

सज्जलकः —( उपसृत्य ) सुखं भवत्यै ।

गणिका—साअदं अय्यस्स । हञ्जे ! आसणं देदु अय्यस्स । [ स्वागतमार्यस्य । हञ्जे ! आसनं दीयतामार्याय । ]

सज्जलकः —भवतु भवतु । गृहीतमासनम् । त्वरिततरमनुष्ठेयं किञ्चित् कार्यमस्ति ।

गणिका—एवं भणादु अय्यो । [ एवं, भणत्वार्यः । ]

सज्जलकः —आर्यचारुदत्तेनास्मि प्रेषितः —यस्तावदलङ्कारो मम हस्ते निक्षिप्तः, स त्वसंभोगमलिनतया गृहस्यासान्निध्यात् कौटुम्बिकानां दुरारक्षः । तद् गृह्यताम् इति ।

गणिका—इमं तस्स चारुदत्तस्य देदु अय्यो । [ इमं तस्मै चारुदत्ताय ददात्वार्यः । ]

सज्जलकः —भवति ! न खल्वहं गच्छामि ।

गणिका—अहं जाणामि तस्य गेहे साहसं करिअ आणीदो अअं अलङ्कारो । तस्स गुणाणि अणुकम्पेदु अय्यो । [ अहं जानामि तस्य गेहे साहसं कृत्वानीतोऽयमलङ्कारः । तस्य गुणाननुकम्पतामार्यः । ]

सज्जलकः —( आत्मगतम् ) कथं विदितोऽस्म्यनया ।

गणिका—को एत्थं, पवहणं दाव अय्यस्स । [ कोऽत्र, प्रवहणं तावदार्यायै । ]

मदनिका—णेमिसद्दो विअ सुणीअदि । आअदेण पवहणेण होदव्वं [ नेमिशब्द इव श्रूयते । आगतेन प्रवहणेन भवितव्यम् ]

गणिका—( स्वैराभरणैर्मदनिकामलङ्कृत्य ) आरुहदु अय्यो अय्याए सह पवहणं । [ आरोहत्वार्यं आर्यया सह प्रवहणम् । ]

मदनिका—अज्जुए ! किं एदं । [ अज्जुके ! किमेतत् । ]

गणिका—मा खु मा खु एवं मन्तिअ । अय्या खु सि दाणिं संवुत्ता । गण्हदु अय्यो । ( मदनिकां गृहीत्वा सज्जलकाय प्रयच्छति । ) [ मा खलु मा खल्वेवं मन्त्रयित्वा ] आर्या खल्वसीदानीं संवृत्ता । गृह्णात्वार्यः । ]

सज्जलकः —( आत्मगतम् ) भोः ! कदा भवत्याः प्रतिकर्तव्यं भविष्यति । अथवा, शान्तं शान्तं पापम् ।

नरः प्रत्युपकारार्थी विपत्तौ लभते फलम् ।
द्विषतामेव कालोऽस्तु योऽस्या भवतु तस्य वा ॥ ७

( तया सह निष्क्रान्तः सज्जलकः । )

गणिका—चउरिए ! । [ चतुरिके ! ]

( प्रविश्य )

चेटी—अज्जुए ! इअम्हि । [ अज्जुके ! इयमस्मि । ]

गणिका—हञ्जे ! पेक्ख जागरन्तीए मए सिविणो दिट्ठो । एवं । [ हञ्जे ! प्रेक्षस्व जाग्रत्या मया स्वप्नो दृष्ट एवम् । ]

चेटी—पिअं मे, अमुदंकणाडअं संवुत्तं । [ प्रियं मे, अमृताङ्कनाटकं संवृत्तम् । ]

गणिका—एहि इमं अलङ्कारं गण्हिअ अय्यचारुदत्तं अभिसरिस्सामो । [ एहीमम-लंकारं गृहीत्वार्यचारुदत्तमभिसरिष्यावः । ]

चेटी—अज्जुए ! तह एदं पुण अभिसारिआसहाअभूदं दुद्दिणं उण्णमिदं । [ अज्जुके ! तथा । एतत् पुनरभिसारिकासहायभूतं दुर्दिनमुन्नमितम् । ]

गणिका—हदासे ! मा हु वड्ढावेहि । [ हताशे ! मा खलु वर्धय । ]

चेटी—एदु एदु अज्जुआ । [ एत्वेत्वज्जुका । ]

( निष्क्रान्ते । )

## इति चतुर्थोऽङ्कः ।

## पञ्चरात्रस्य नाटकीय–भूमिका

दुर्योधनः —कुरुराजः ।
भीष्मः —दुर्योधनादीनां पितामहः ।
द्रोणः —दुर्योधनादीनां धनुराचार्यः ।
कर्णः —अङ्गेश्वरो दुर्योधनस्य सखा ।
शकुनिः —दुर्योधनस्य मातुलः ।
भटः —दुर्योधनस्य भृत्यः ।
वृद्धगोपालकः —विराटस्य गोकुलाध्यक्षः ।
गोमित्रकः —कश्चिद् गोपालः ।
राजा—मत्स्यदेशाधिपतिर्विराटनामा ।
भगवान्—ब्राह्मणव्यञ्जनो युधिष्ठिरः ।
भीमसेनः —धर्मपुत्रस्यानुजः ।
अर्जुनः —तथा
बृहन्नला—अर्जुनः स्त्रीरूपधरः ।
अभिमन्युः —अर्जुनस्य पुत्रः ।
उत्तरः —विराटस्य पुत्रः ।
सूतः —विराटस्याभिमन्योश्च सारथिः ।
काञ्चुकीयः, दूतः, भटः —विराटस्य परिजनः

———

# पञ्चरात्रम्

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः —

द्रोणः पृथिव्यर्जुनभीमदूतो
यः कर्णधारः शकुनीश्वरस्य ।
दुर्योधनो भीष्मयुधिष्ठिरः स
पायाद् विराडुत्तरगोऽभिमन्युः ॥ १

( परिक्रम्य ) एवमार्यमिश्रान् विज्ञापयामि । अये किन्नु खलु मयि विज्ञापन-व्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

( नेपथ्ये )

अहो कुरुराजस्य यज्ञसमृद्धिः ।

सूत्रधारः —भवतु, विज्ञातम् ।

सर्वैरन्तःपुरैः सार्धं प्रीत्या प्राप्तेषु राजसु ।
यज्ञो दुर्योधनस्यैष कुरुराजस्य वर्तते ॥ २

( निष्क्रान्तः । )

इति स्थापना ।

अथ विष्कम्भकः

( ततः प्रविशन्ति ब्राह्मणास्त्रयः । )

सर्वे—अहो ! कुरुराजस्य यज्ञसमृद्धिः ।

प्रथमः —इह हि,

द्विजोच्छिष्टैरन्नैः प्रकुसुमितकाशा इव दिशो
हविर्धूमैः सर्वे हृतकुसुमगन्धास्तरुगणाः ।
मृगैस्तुल्या व्याघ्रा वधनिभृतसिंहाश्च गिरयो
नृपे दीक्षां प्राप्ते जगदपि समं दीक्षितमिव ॥ ३

द्वितीयः —सम्यग् भवानाह ।

तृप्तोऽग्निर्हविषामरोत्तममुखं तृप्ता द्विजेन्द्रा धनै-
स्तृप्ताः पक्षिगणाश्च गोगणयुतास्ते ते नराः सर्वशः ।
हृष्टं सम्प्रति सर्वतो जगदिदं गर्जन्नृपे सद्गुणै-
रेवं लोकमुदारुरोह सकलं देवालयं तद्गुणैः ॥ ४

तृतीयः —इमेऽत्रभवन्तो द्विजातयः,

राज्ञां वेष्टनपट्टघृष्टचरणाः श्लाघ्यप्रभूतश्रवा
वार्द्धक्येऽप्यभिवर्धमाननियमाः स्वाध्यायशूरैर्मुखैः ।
विप्रा यान्ति वयःप्रकर्षशिथिला यष्टित्रिपादक्रमाः
शिष्यस्कन्धनिवेशिताञ्चितकरा जीर्णा गजेन्द्रा इव ॥ ५

सर्वे—भो भो माणवकाः ! भो भो माणवकाः ! अनवसितेऽवभृथस्नाने न खलु तावदग्निरुत्स्रष्टव्यो भवद्भिः ।

प्रथमः —हा धिग, दर्शितमेव तावद् बटुचापलम् ।

एषा दीप्तैकयूपा कनकमयभुजेवाभाति वसुधा
चैत्याग्निर्लौकिकाग्निं द्विज इव वृषलं पार्श्वे न सहते ।
नात्यर्थं प्लुष्टपृष्ठा हरितकुशतया वेदी परिवृता
प्राग्वंशं चैष धूमो गज इव नलिनीं फुल्लां प्रविशति ॥ ६

द्वितीयः —एवमेतद्,

अग्निरग्निभयादेष भीतैर्निर्वास्यते द्विजैः ।
कुले व्युत्क्रान्तचारित्रे ज्ञातिर्ज्ञातिभयादिव ॥ ७

तृतीयः —

शकटी च घृतापूर्णा सिच्यमानापि वारिणा।
नारीवोपरतापत्या बालस्नेहेन दह्यते॥ ८

प्रथमः —सम्यग् भवानाह।

एतां चक्रधरस्य धर्मशकटीं दग्धुं समभ्युद्यतो
दर्भे शुष्यति नीलशाद्वलतया वह्निः शनैर्वामनः।
वातेनाकुलितः शिखापरिगतश्चक्रं क्रमेणागतो
नेमीमण्डलमण्डलीकृतवपुः सूर्यायते पावकः॥ ९

द्वितीयः —इदमपरं पश्य,

वल्मीकमूलाद् दहनेन भीतास्तत्कोटरैः पञ्च समं भुजङ्गाः।
समं विपन्नस्य नरस्य देहाद् विनिःसृताः पञ्च यथेन्द्रियाणि॥ १०

तृतीयः —इदमपरं पश्येतां भवन्तौ,

दह्यमानस्य वृक्षस्य सानिलेन मखाग्निना।
कोटरान्तरदेहस्थाः खगाः प्राणा इवोद्गताः॥ ११

प्रथमः —एवमेतत्,

शुष्केणैकेन वृक्षेण वनं पुष्पितपादपम्।
कुलं चारित्रहीनेन पुरुषेणेव दह्यते॥ १२

वनं सवृक्षक्षुपगुल्ममेतत् प्रकाममाहारमिवोपभुज्य।
कृशानुसारेण हुताशनोऽसौ नदीमुपस्प्रष्टुमिवावतीर्णः॥ १३

द्वितीयः —एष एषः,

गतो वृक्षाद् वृक्षं विततकुशचीरेण दहनः
कदल्या विप्लुष्टं पतति परिणामादिव फलम्।
असौ चाग्रे तालो मधुपटलचक्रेण महता
चिरं मूले दग्धः परशुरिव रुद्रस्य पतति॥ १४

तृतीयः —हन्त सत्पुरुषरोष इव प्रशान्तो भगवान् हुताशनः।

एतदग्नेर्बलं नष्टमिन्धनानां परिक्षयात्।
दानशक्तिरिवार्यस्य विभवानां परिक्षयात्॥ १५

प्रथमः —

स्रग्भाण्डमरणीं दर्भानुपभुङ्क्ते हुताशनः।
व्यसनित्वान्नरः क्षीणः परिच्छदमिवात्मनः॥ १६

द्वितीयः —

अवनतविटपो नदीपलाशः पवनवशाच्चलितैकपर्णहस्तः ।
दवदहनविपन्नजीवितानामुदकमिवैष करोति पादपानाम् ॥ १७

तृतीयः —तदागम्यताम् । वयमपि तावदुपस्पृशामः ।

उभौ—बाढम् ।

( सर्वे उपस्पृश्य )

प्रथमः —अये अयमत्रभवता कुरुराजो दुर्योधनो भीष्मद्रोणपुरःसरः सर्वराजमण्डले-नानुगम्यमान इत एवाभिवर्तते । इमे हि,

यज्ञेन भोजय महीं जय विक्रमेण रोषं परित्यज, भव स्वजने दयावान् ।
इत्येवमागतकथामधुरं ब्रुवन्तः कुर्वन्ति पाण्डवपरिग्रहमेव पौराः ॥ १८

तदागम्यताम् । वयमपि तावत् कुरुराजं सम्भावयामः ।

उभौ—बाढम् ।

सर्वे—जयतु भवान् जयतु ।

( निष्क्रान्ताः सर्वे । )

इति विष्कम्भकः ।

# अथ प्रथमोऽङ्कः

( ततः प्रविशतो भीष्मद्रोणौ । )

द्रोणः —धर्ममालम्बमानेन दुर्योधनेनाहमेवानुगृहीतो नाम । कुतः,

अतीत्य बन्धूनवलङ्घ्य मित्राण्याचार्यमागच्छति शिष्यदोषः ।
बालं ह्यपत्यं गुरवे प्रदातुर्नैवापराधोऽस्ति पितुर्न मातुः ॥ १९

भीष्मः —एष दुर्योधनः,

अवाप्य रूप्यग्रहणात् समुच्छ्रयं रणप्रियत्वादयशो निपीतवान् ।
निषेव्य धर्मं सुकृतस्य भाजनं स एव रूपेण चिरस्य शोभते ॥ २०

( ततः प्रविशति दुर्योधनः कर्णः शकुनिश्च । )

दुर्योधनः —कृतश्रद्धो ह्यात्मा वहति परितोषं गुरुजनो
जगद् विश्वस्तं मे निवसति गुणो नष्टमयशः ।
मृतैः प्राप्यः स्वर्गो यदि कथयत्येतदनृतं
परोक्षो न स्वर्गो बहुगुणमिहैवैष फलति ॥ २१

कर्णः —गान्धारीमातः ! न्यायेनागतमर्थमतिसृजता न्याय्यमेव भवता कृतम् । कुतः,

बाणाधीना क्षत्रियाणां समृद्धिः पुत्रापेक्षी वञ्च्यते सन्निधाता ।
विप्रोत्सङ्गे वित्तमावर्ज्य सर्वं राज्ञा देयं चापमात्रं सुतेभ्यः ॥ २२

शकुनिः —सम्यगाह गङ्गोपस्पर्शनाद् धौतकल्मषाङ्गोऽङ्गराजः ।

कर्णः —

इक्ष्वाकुशर्य्यातिययातिराममान्धातृनाभागनृगाम्बरीषाः ।
एते सकोशाः पुरुषाः सराष्ट्रा नष्टाः शरीरैः क्रतुभिर्धरन्ते ॥ २३

सर्वे—गान्धारीमातः ! यज्ञसमाप्त्या दिष्टया भवान् वर्धते ।

दुर्योधनः —अनुगृहीतोऽस्मि । भो आचार्य ! अभिवादये ।

द्रोणः —एह्येहि पुत्र ! अयमक्रमः ।

दुर्योधनः —अथ कः क्रमः ।

द्रोणः —किं न पश्यति भवान्,

दैवतं मानुषीभूतमेष तावन्नमस्यताम् ।
अन्यायाचरणं मन्ये भीष्ममुत्क्रम्य वन्दितुम् ॥ २४

भीष्मः—मा मा भवानेवम् । बहुभिः कारणैरपकृष्टोऽहं भवतः । कुतः,

अहं हि मात्रा जनितो भवान् स्वयं ममायुधं वृत्तिरपह्नवस्तव ।
द्विजो भवान् क्षत्रियवंशजा वयं गुरुर्भवान् शिष्यमहत्तरा वयम् ॥ २५

द्रोणः—नोत्सहन्ते महात्मानो ह्यात्मानमपस्तोतुम् । एहि पुत्र ! अभिवादयस्व माम् ।

दुर्योधनः—आचार्य ! अभिवादये ।

द्रोणः—एह्येहि पुत्र ! एवमेवावभृथस्नानेषु खेदमवाप्नुहि ।

दुर्योधनः—अनुगृहीतोऽस्मि । पितामह ! अभिवादये ।

भीष्मः—एह्येहि पौत्र ! एवमेव ते बुद्धिप्रशमनं भवतु ।

दुर्योधनः—अनुगृहीतोऽस्मि । मातुल ! अभिवादये ।

शकुनिः—वत्स !

एवमेव क्रतून् सर्वान् समानीयाप्तदक्षिणान् ।
राजसूये नृपान् जित्वा जरासन्ध इवानय ॥ २६

द्रोणः—अहो ! आशीर्वचनेऽपि शकुनिरुद्योगं जनयति । अहो ! प्रियविरोधः खल्वयं क्षत्रियकुमारः ।

दुर्योधनः—वयस्य कर्ण ! गुरुजनप्रणामावसाने प्राप्तक्रममुपभुज्यतां वयस्यविस्रम्भः।

कर्णः—गान्धारीमातः !

क्रतुव्रतैस्ते तनु गात्रमेतत् सोढुं बलं शक्ष्यसि पीडयानि ।
अन्तस्त्वनामन्त्र्य न धर्षयामि राजर्षिधीराद् वचनाद् भयं मे ॥ २७

दुर्योधनः—एवमेव ते बुद्धिरस्तु ।

द्रोणः—पुत्र दुर्योधन ! एष महेन्द्रप्रियसखो भीष्मको नाम भवन्तं सभाजयति ।

दुर्योधनः—स्वागतमार्याय । अभिवादये ।

भीष्मः—पौत्र दुर्योधन ! एष दक्षिणापथपरिघभूतो भूरिश्रवा नाम भवन्तं सभाजयिष्यति ।

दुर्योधनः—स्वागतमार्याय ।

द्रोणः—पुत्र दुर्योधन ! भवतो यज्ञं सभाजयता वासुभद्रेण प्रेषितोऽभिमन्युर्भवन्तं सभाजयति ।

शकुनिः—वत्स दुर्योधन ! एष जरासन्धपुत्रः सहदेवो भवन्तमभिवादयति ।

दुर्योधनः—एह्येहि वत्स ! पितृसदृशपराक्रमो भव ।

सर्वे—एतत् सर्वराजमण्डलं भवन्तं सभाजयति ।

दुर्योधनः—अनुगृहीतोऽस्मि । भोः ! किन्नु खलु समागते सर्वराजमण्डले विराटो नागच्छति ।

शकुनिः —प्रेषितोऽस्य मया दूतः, शङ्के पथि वर्तत इति ।

दुर्योधनः —भो आचार्य ! धर्मे धनुषि चाचार्य ! प्रतिगृह्यतां दक्षिणा ।

द्रोणः —दक्षिणेति । भवतु भवतु । व्यपश्रयिष्ये तावद् भवन्तम् ।

दुर्योधनः —कथमाचार्योऽपि व्यपश्रयिष्यते ।

भीष्मः —भोः ! किन्नु खलु प्रयोजनं, यदा—

पीतः सोमो बाल्यदत्तो नियोगाच्छत्रच्छाया सेव्यते ख्यातिरस्ति ।
किं तद् द्रव्यं किं फलं को विशेषः क्षत्राचार्यो यत्र विप्रो दरिद्रः ॥ २८

दुर्योधनः —आज्ञापयतु भवान् किमिच्छति । किमनुतिष्ठामि ।

द्रोणः —पुत्र दुर्योधन ! कथयामि ।

दुर्योधनः —किमिदानीं भवता विचार्यते,

प्राणाधिकोऽस्मि भवता च कृतोपदेशः
शूरेषु यामि गणनां कृतसाहसोऽस्मि ।
स्वच्छन्दतो वद किमिच्छसि किं ददानि
हस्ते स्थिता मम गदा भवतश्च सर्वम् ॥ २९

द्रोणः —पुत्र ! ब्रवीमि खलु तावत् । बाष्पवेगस्तु मां बाधते ।

सर्वे—कथमाचार्योऽपि बाष्पमुत्सृजति ।

भीष्मः —पौत्र दुर्योधन ! अफलस्ते परिश्रमः ।

दुर्योधनः —कोऽत्र ।

( प्रविश्य )

भटः —जयतु महाराजः ।

दुर्योधनः —आपस्तावत् ।

भटः —यदाज्ञापयति महाराजः । ( निष्क्रम्य प्रविश्य ) जयतु महाराजः । इमा आपः ।

दुर्योधनः —आनय । ( कलशं गृहीत्वा ) भो आचार्य ! अश्रुपातोच्छिष्टस्य क्रियतां शौचम् ।

द्रोणः —भवतु भवतु । मम कार्यक्रियैव मुखोदकमस्तु ।

दुर्योधनः —हा धिक्,

यदि विमृशसि पूर्वजिह्मतां मे यदि च समर्थयसे न दास्यतीति ।
शरशतकठिनं प्रयच्छ हस्तं सलिलमिदं करणं प्रतिग्रहाणाम् ॥ ३०

द्रोणः —हन्त लब्धो मे हृदयविश्वासः । पुत्र ! श्रूयतां,

येषां गतिः क्वापि निराश्रयाणां संवत्सरैर्द्वादशभिर्न दृष्टा ।
त्वं पाण्डवानां कुरु संविभागमेषा च भिक्षा मम दक्षिणा च ॥ ३१

शकुनिः —( सोद्वेगम् ) मा तावद् भोः !

उपन्यस्तस्य शिष्यस्य विश्वस्तस्य च गौरवे ।
यदप्रस्तुतमुत्पाद्य युक्तेयं धर्मवञ्चना ॥ ३२

द्रोणः— कथं धर्मवञ्चनेति । मा तावद् । भो गान्धारविषयविस्मित शकुने ! त्वदनार्यभावात् सर्वलोकमनार्यमिति मन्यसे । हन्त भोः !

भ्रातृणां पैतृकं राज्यं दीयतामिति वञ्चना ।
किं वरं[1] याचितैर्दत्तं बलात्कारेण तर्हृतम् ॥ ३३

सर्वे—कथं बलात्कारेण नाम ।

भीष्मः —पौत्र दुर्योधन ! अवभृथस्नानमात्रमेव खलु तावत् । मित्रमुखस्य शत्रोः शकुनेर्वचनं न श्रोतव्यम् । पश्य पौत्र !

यत् पाण्डवा द्रुपदराजसुतासहायाः
कान्ताररेणुपरुषाः पृथिवीं भ्रमन्ति ।
यत् त्वं च तेषु विमुखस्त्वयि ते च वामा-
स्तत् सर्वमेव शकुनेः परुषावलेप ॥ ३४

दुर्योधनः —भवतु, एवं तावदाचार्य ! पृच्छामि ।

द्रोणः —पुत्र ! कथय ।

दुर्योधनः —

यत् पुरा ते सभामध्ये राज्ये माने च धर्षिताः ।
बलात्कारसमर्थैस्तैः किं रोषो धारितस्तदा ॥ ३५

द्रोणः —अत्रेदानीं धर्मच्छलेन वञ्चितो द्यूताश्रयवृत्तियुधिष्ठिरः प्रष्टव्यः,

येन भीमः सभास्तम्भं तुलयन्नेव वारितः ।
यद्येकस्मिन् विमुक्तः स्यान्नास्माञ्छकुनिराक्षिपेत् ॥ ३६

भीष्मः —अन्यत् प्रस्तुतमन्यदापतितम् । भो आचार्य ! कार्यमत्र गुरुतरं, न कलहः ।

द्रोणः —मात्र कदर्थनं कार्यं, कलह एव भवतु ।

भीष्मः —प्रसीदत्वाचार्यः पश्य पौत्र !

ये दुर्बलाश्च कृपणाश्च निराश्रयाश्च
त्वत्तश्च शर्म मृगयन्ति न गर्वयन्ति ।
ज्येष्ठो भवान् प्रणयिनस्त्वयि ते कुटुम्बे
तान् धारयिष्यसि मृगैः सह वर्तयन्तु ॥ ३७

---

१. परम् ।

शकुनिः —वर्तयन्तु वर्तयन्तु ।

कर्णः —भो आचार्य ! अलममर्षेण । दुर्योधनो हि नाम,

हितमपि परुषार्थं रुष्यति श्राव्यमाणो
वरपुरुषविशेषं नेच्छति स्तूयमानम् ।
गतमिदमवसानं रक्ष्यतां शिष्यकार्यं
गज इत बहुदोषोमार्दवेनैव ग्राह्यः ॥ ३८

द्रोणः —वत्स कर्ण ! तेजस्वि ब्राह्मण्यम् । काले सम्बोधितोऽस्मि । एषोऽहं भवच्छन्दमनुवर्ते । पुत्र दुर्योधन ! अहं तव प्रभावी ननु ।

भीष्मः —एष इदानीं मार्गेणारब्धः । सान्त्वं हि नाम दुर्विनीतानामौषधम् ।

दुर्योधनः —न ममैव, कुलस्यापि मे भवान् प्रभुः ।

द्रोणः —एतत् तवैव युक्तम् । तत् पुत्र !

त्वं वञ्च्यसे यदि मया न तवात्र दोष-
स्त्वां पीडयामि यदि वास्तु तवैव लाभः ।
भेदाः परस्परगता हि महाकुलानां
धर्माधिकारवचनेषु शमीभवन्ति ॥ ३९

दुर्योधनः —तेन हि समर्थयितुमिच्छामि ।

द्रोणः —पुत्र ! केन समर्थयितुमिच्छसि ।

भीष्मेण कर्णेन कृपेण केन किं सिन्धुराजेन जयद्रथेन ।
किं द्रौणिनाहो विदुरेण साधं पित्रा स्वमात्रा वद पुत्र ! केन ॥ ४०

दुर्योधनः —नहि नहि, मातुलेन ।

द्रोणः —शकुनिना । हन्त विपन्नं कार्यम् ।

दुर्योधनः —मातुल ! इतस्तावत् । वयस्य कर्ण ! इतस्तावत् ।

द्रोणः —भवतु, एवं तावत् करिष्ये । वत्स गान्धारराज ! इतस्तावत् ।

शकुनिः —अयमस्मि ।

द्रोणः —वत्स !

क्रोधप्रायं वयो जीर्णं क्षन्तव्यं वटुचापलम् ।
अस्य रूक्षस्य वचसः परिष्वङ्गः शमीक्रिया ॥ ४१

भीष्मः —( आत्मगतम् )

एष शिष्यस्य वात्सल्याच्छकुनिं याचते गुरुः ।
एवं सान्त्वीकृतो[1] ह्येष नैव मुञ्चति जिह्मताम् ॥ ४२

शकुनिः —( आत्मगतम् ) अहो शठः खल्वाचार्यः स्वकार्यलोभान्मां सान्त्वयति ।

१. सान्त्वीकृतोऽप्येषः ।

सर्वे परिक्रम्योपविशन्ति । )

दुर्योधनः —मातुल ! पाण्डवानां राज्यार्धं प्रति को निश्चयः :

शकुनिः —न दातव्यमिति मे निश्चयः ।

दुर्योधनः —दातव्यमिति वक्तुमर्हति मातुलः :

शकुनिः —यदि दातव्ये राज्ये किमस्माभिः सह मन्त्रयसे । ननु सर्वमेव प्रदीयताम् ।

दुर्योधनः —वयस्य अङ्गराज ! भवानिदानीं न किञ्चिदाह ।

कर्णः —इदानीं किमभिधास्यामि,

रामेण भुक्तां परिपालितां च सुभ्रातृतां न प्रतिषेधयामि ।
क्षमाक्षमत्वे तु भवान् प्रमाणं सङ्ग्रामकालेषु वयं सहायाः ॥ ४३

दुर्योधनः —मातुल ! बलवत्प्रत्यमित्रोऽनुपजीव्यश्च कश्चित् कुदेशश्चिन्त्यताम् ! तत्र वसेयुः पाण्डवाः ।

शकुनिः —हन्त भोः !

शून्यमित्यभिधास्यामि कः पार्थाद् बलवत्तरः ।
ऊषरेष्वपि सस्यं स्याद् यत्र राजा युधिष्ठिरः ॥ ४४

दुर्योधनः —अथेदानीम्—

गुरुकरतलमध्ये तोयमावर्जितं मे
श्रुतमिह कुलवृद्धैर्यत् प्रमाणं पृथिव्याम् ।
तदिदमपनयो वा वञ्चना वा यथा वा
भवतु नृप ! जलं तत् सत्यमिच्छामि कर्तुम् ॥ ४५

शकुनिः —अनृतवचनान्मोचयितव्यो भवान् ननु ।

दुर्योधनः —अथ किम् ।

शकुनिः —तेन हि इतस्तावत् । ( उपसृत्य ) भो आचार्य ! इहात्रभवान् कुरुराजो भवन्तं विज्ञापयति ।

द्रोणः —वत्स गान्धारराज ! अभिधीयताम् ।

शकुनिः —यदि पञ्चरात्रेण पाण्डवानां प्रवृत्तिरुपनेतव्या, राज्यस्यार्धं प्रदास्यति किल ! समानयतु भवानिदानीम् ।

द्रोणः —मा तावद् भोः !

ये कुर्तुकामैश्छलनं भवद्भिः संवत्सरैर्द्वादशभिर्न दृष्टाः ।
ते पञ्चरात्रेण मयोपनेया वरं ह्यदत्तं विशदाक्षरेण ॥ ४६

भीष्मः —पौत्र दुर्योधन ! अच्छलो धर्मः । वयमपि तावदस्मिन्नर्थे प्रीताः स्मः । पश्य पौत्र !

वर्षेण वा वर्षशतेन तेषां त्वं पाण्डवानां कुरु संविभागम् ।
तस्मात् प्रतिज्ञां कुरु वीर ! सत्यां सत्या प्रतिज्ञा हि सदा कुरूणाम् ॥ ७४

दुर्योधनः —एष एव मे निश्चयः ।

द्रोणः —( आत्मगतम् )

अद्य मे कार्यलोभेन हनूमत्त्वं गता स्पृहा ।
लङ्घयित्वार्णवं येन नष्टा सीता निवेदिता ॥ ४८

तत् कुतो नु खलु पाण्डवानां प्रवृत्तिरुपनेतव्या ।

( प्रविश्य )

भटः —जयतु महाराजः । विराटनगराद् दूतः प्राप्तः ।

सर्वे: —शीघ्रं प्रवेश्यताम् ।

भटः —यदाज्ञापयथ । ( निष्क्रान्तः )

( प्रविश्य )

दूतः —जयतु महाराजः ।

सर्वे —किमागतो विराटेश्वरः ।

भटः —विषादेनावृतो नोपगच्छति, यत्तत्सम्बन्धि सन्निकृष्टं कीचकानां भ्रातृशतं,

रात्रौ छन्नेन केनापि बाहुभ्यामेव हिंसितम् ।
दृश्यते हि शरीराणामशस्त्रजनितो वधः ॥ ४९

भीष्मः —कथमशस्त्रेणेति । भो आचार्य ! अभ्युपगम्यतां पञ्चरात्रम् ।

द्रोणः —किमर्थम् ।

भीष्मः —

भीमसेनस्य लीलैषा सुव्यक्तं बाहुशालिनः ।
योऽस्मिन् भ्रातृशते रोषः स तस्मिन् फलितः शते ॥ ५०

द्रोणः —कथं भवान् जानाति ।

भीष्मः —

कथं पण्डित ! कूलेषु भ्रान्तानां बालचापलम् ।
नाभिजानन्ति वत्सानां शृङ्गस्थानानि गोवृषाः ॥ ५१

द्रोणः —गोवृषा इति । हन्त सिद्धं कार्यम् । पुत्र दुर्योधन ! अस्तु पञ्चरात्रम् ।

दुर्योधनः —अथ किम् ।

द्रोणः —भो भो यज्ञमनुभवितुमागता राजानः ! शृण्वन्तु शृण्वन्तु भवन्तः। इहात्रभवान् कुरुराजो दुर्योधनः, न, न, मातुलसहितः यदि पाण्डवानां प्रवृत्तिरुपनेतव्या, राज्यस्यार्धं प्रदास्यति किल। ननु पुत्र !

दुर्योधनः —अथ किम्।

द्रोणः —एतद् द्विस्त्रिः सम्प्रधार्यताम्।

शकुनिः —काले ज्ञास्यामि।

द्रोणः —ननु गाङ्गेय !

भीष्मः —( आत्मगतम् )

आचार्यस्य यदा हर्षो धैर्यमुत्क्रम्य सूचितः।
शङ्के दुर्योधनेनैष वञ्च्यमानेन वञ्चितः ॥ ५२

( प्रकाशम् ) पौत्र दुर्योधन ! अस्ति मम विराटेनाप्रकाशं वैरम्, अथ भवतो यज्ञमनुभवितुमनागत इति। तस्मात् क्रियतां तस्य गोग्रहणम्। ब्राह्मणार्जवबुद्धे !

धर्षिता रथशब्देन रोषमेष्यन्ति पाण्डवाः।
अस्ति तेषां कृतज्ञत्वमिष्टं गोग्रहणे स्थितम् ॥ ५३

( प्रविश्य )

भटः —सज्जाः खलु रथा वाहाः प्रवेशाभिमुखाय ते।

दुर्योधनः —

एभिरेव रथैः शीघ्रं क्रियतां तस्य गोग्रहः।
गदा यज्ञप्रशान्ता च पुनर्मे करमेष्यति ॥ ५४

द्रोणः —तस्मान्मे रथमानयन्तु पुरुषाः,

शकुनिः —हस्ती ममानीयतां,

कर्णः —भारार्थं भृशमुद्यतैरिह हयैर्युक्तो रथः स्थाप्यताम्।

भीष्मः —बुद्धिर्मे त्वरते विराटनगरं गन्तुं धनुस्त्वर्यतां

सर्वे —मुक्त्वा चापमिहैव तिष्ठतु भवानाज्ञाविधेया वयम् ॥ ५५

द्रोणः —पुत्र दुर्योधन ! आवां तव युद्धे पराक्रमं द्रष्टुमिच्छावः।

दुर्योधनः —यदभिरुचितं भवते।

द्रोणः —वत्स गान्धारराज ! अस्मिन् गोग्रहणे तव खलु प्रथमरथः।

शकुनिः —बाढम्। प्रथमः कल्पः।

( निष्क्रान्ताः सर्वे। )

इति प्रथमोऽङ्कः

( ततः प्रविशति वृद्धगोपालकः )

वृद्धगोपालकः —गावो मे अहीणवच्छा होन्तु । अविहवा अ गोवजुवदीओ होन्तु । णो लाआ विलाडो एक्कच्छत्तप्पुहुवीपदी होदु । महालाअष्ष विलाडश्श वष्षवड्ढणगोप्पदाणणिमित्तं इमष्षि णअलोववणवोहीए आअन्तु गोधणं षव्वे च किदमङ्गलमोदआ गोवदालआ दालिआ अ दाव । एषु ज्जेट्ठं गच्छिअ अणुभविष्षम् । ( विलोक्य ) किण्णु हु एषो वाअषो षुक्खलुक्खं आलुहिअ षुक्खषाखाणिघट्टिअतुण्डं आदिच्चाहिमुहं विष्षलं विलवदि । षन्ती होदु षन्ती होदु अम्हाणं गोधणष्ष अ । जाव एषु ज्जेट्ठं गच्छिअ गोवदालआणं दालिआणं वाहलामि । गोमित्तअ ! गोमित्तअ ! । [ गावो मेऽहीनवत्सा भवन्तु । अविधवाश्च गोपयुवतयो भवन्तु । अस्माकं राजा विराट एकच्छत्रपृथिवीपतिर्भवतु । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायान्तु गोधनं सर्वे च कृतमङ्गलमोदका गोपदारका दारिकाश्च तावत् । एषु ज्यैष्ठ्यं गत्वानुभविष्यामि । किन्नु खल्वेष वायसः शुष्कवृक्षमारुह्य शुष्कशाखानिघट्टिततुण्डमादित्याभिमुखं विस्वरं विलपति । शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च ।यावदेषु ज्यैष्ठ्यं गत्वा गोपदारकान् दारिका व्याहरामि गोमित्रक ! गोमित्रक ! ]

( प्रविश्य )

गोमित्रकः —मातुल ! वन्दामि । [ मातुल ! वन्दे । ]

वृद्धगोपालकः —षन्ती होदु षन्ती होदु अम्हाअं गोधणष्ष अ । अले गोमित्तअ ! महालाअष्ष विलाडश्श वष्षवड्ढणगोप्पदाणणिमित्तं इमष्षि णअलोववणवीहीए आअन्तु गोधणं षव्वे च किदमङ्गलमोदआ गोवदालिआ अ । अले गोमित्तअ ! गोवदालआणं दालिआणं वाहल । [ शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च । अरे गोमित्रक ! महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायान्तु गोधनं सर्वे च कृतमङ्गलमोदका गोपदारका दारिकाश्च । अरे गोमित्रक ! गोपदारकान् दारिका च व्याहर । ]

गोमित्रकः —जं मादुलो आणवेदि । गोलक्खिणिए ! घिदपिण्ड ! षामिणि ! वषभदत्त ! कुम्भदत्त ! महिषदत्त ! आअच्छह आहच्छह शिग्घं । [ यन्मातुल आज्ञापयति । गोरक्षिणिके ! घृतपिण्ड ! स्वामिनि ! वृषभदत्त ! कुम्भदत्त ! महिषदत्त ! आगच्छतागच्छत शीघ्रम् । ]

( ततः प्रविशन्ति सर्वे । )

सर्वे—मादुल ! वन्दामो । [ मातुल ! वन्दामहे । ]

वृद्धगोपालकः —षन्ती होदु षन्ती होदु अम्हाणं गोवदालआणं। महालाअष्ष विलाडष्ष वष्षवड्ढणगोप्पदाणणिमित्तं इमष्षिं णअलोववणवीहीए आअन्तु गोधणं। तत्तअं वेलं गाअन्तो णच्चन्तो होम। [ शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोपदारकाणां दारिकाणां च। महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायातु गोधनम्। तावतीं वेलां गायन्तो नृत्यन्तो भवामः । ]

वृद्धगोपालकः —हीही षुट्ठु णच्चिदम्, षुट्ठु गाइदं ! जाव अहं पि णच्चेमि । [ हीही सुष्ठु नर्तितं, सुष्ठु गीतं, यावदहमपि नृत्यामि । ]

सर्वे —हाहा मादुल ! अदिमहन्तं लेणुं उप्पदिदो । ] हा हा मातुल ! अतिमहान् रेणुरुत्पतितः ]

वृद्धगोपालकः —ण हु लेणु एव्वं, षंखदुन्दुभिघोषं उप्पदिदो । [ न खलु रेणुरेव, शङ्खदुन्दुभिघोषः उत्पतितः ]

सर्वे —दिवाचन्दप्पभापण्डुलजोण्हावगुण्ठिदो षदमण्डलु षुय्यो अत्थि अ णत्थि अ। दिवाचन्द्रप्रभापाण्डुरज्योत्स्नावगुण्ठितः शतमण्डलः सूर्योऽस्ति च नास्ति च । ]

गोमित्रकः —हाहा मादुल ! एदे के वि मणुष्षा दहिपिण्डपण्डरेहि छत्तेहि घोडअषअडिअं आलुहिअ षव्वं घोषं विद्दवन्ति चोला । हाहा मातुल मातुल ! एते केऽपि मनुष्या दधिपिण्डपाण्डरैश्छत्रैर्घोटकशकटिकामारुह्य सर्वे विद्रवन्ति चोराः । ]

वृद्धगोपालकः —हीही षरषंपादा उट्ठिदा। दारआ ! दालिआ ! षिग्घं पक्कणं पविषह। हीही शंरसंपाता उत्थिताः । दारका ! दारिकाः ! शीघ्रं पक्कणं प्रविशत । ]

सर्वे —जं मादुलो आणवेदि । ( निष्क्रान्ताः ) [ यन्मातुल आज्ञापयति । ]

वृद्धगोपालकः —हाहा चिट्ठह चिट्ठह । पहरह पहरह । गण्हह गण्हह । इमं वुत्तन्तं महालाअविलाडश्श णिवेदइष्षामो । [ हाहा तिष्ठत तिष्ठत । प्रहरत प्रहरत। गृह्णीत गृह्णीत । इमं वृत्तान्तं महाराजविराटाय निवेदयिष्यामः । ]

( निष्क्रान्तः । )

( ततः प्रविशति भटः )

भटः —भो भो निवेद्यतां महाराजाय विराटेश्वराय—एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैर्ह्रियन्ते गाव इति । तत्र हि,

द्रुतैश्च वत्सैर्व्यथितैश्च गोगणैर्निरीक्षणत्रस्तमुखैश्च गोवृषैः ।
कृतार्तनादाकुलितं समन्ततो गवां कुलं शोच्यमिहाकुलाकुलम् ॥

( नेपथ्ये )

किं धार्तराष्ट्रैरिति ।

भटः —आर्य ! अथ किम् ।

( प्रविश्य )

काञ्चुकीय :—सदृशमेतद् भ्रातृजनेष्वपि द्रोहिणाम् ।

सज्जैश्चापैर्बद्धगोधाङ्गुलित्रा
वर्मच्छन्नाः कल्पितस्यन्दनस्थाः ।
वीर्योत्सिक्ता युद्धसज्जाः कृतास्त्रा
राज्ञो वैरं गोषु निर्यातयन्ति ॥ २

जयसेन ! जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य तावदकालनिवेदनं मन्युमुत्पादयति । तस्मात् पुण्याहावसाने निवेदयिष्ये ।

भटः —आर्य ! अतिपाति कार्यमिदं, शीघ्रं निवेद्यताम् ।

काञ्चुकीयः —इदं निवेद्यते ।

इति विष्कम्भकः

# अथ द्वितीयोऽङ्कः

( ततः प्रविशति राजा । )

राजा —

मा तावद् व्यथितविकीर्णबालवत्सा गावो मे रथरवशङ्कया हि यन्ते ।
पीनांसश्चलवलयः सचन्दनार्द्रो निर्लज्जो मम च करः कराणि भुङ्क्ते ॥ ३

जयसेन ! जयसेन !

( प्रविश्य )

भटः —जयतु जयतु महाराजः ।

राजा —अलं महाराजशब्देन । अवधूतं ने क्षत्रियत्वम् । उच्यतां रणविस्तरः ।

भटः —न विस्तरार्हाणि विप्रियाणि । एष समासः,

एकवर्णेषु गात्रेषु गवां स्यन्दनरेणुना ।
कशापातेषु दृश्यन्ते नानावर्णविभक्तयः ॥ ४

राजा —तेन हि,

धनुरुपनय शीघ्रं कल्प्यतां स्यन्दनो मे
मम गतिमनुयातु च्छन्दतो यस्य भक्तिः ।
रणशिरसि गवार्थे नास्ति मोघः प्रयत्नो
निधनमपि यशः स्यान्मोक्षयित्वा तु धर्मः ॥ ५

भटः —यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

राजा—भोः । किन्नु खलु दुर्योधनस्य मामन्तरेण वैरम् । आ यज्ञमनुभवितुमागत इति । कथमनुभवामि । कीचकानां विनाशेन वयमुन्नीतसन्तापाः संवृत्ताः । अथवा परोक्षमपि पाण्डवानां स्निग्ध इति । सर्वथा योद्धव्यम् । हास्तिनपुरनिवासाच्छीलज्ञो भगवान् दुर्योधनस्य । अथवा,

कामं दुर्योधनस्यैष न दोषमभिधास्यति ।
अर्थित्वादपरिश्रान्तः पृच्छत्येव हि कार्यवान् ॥ ६

कोऽत्र ।

( प्रविश्य )

भटः —जयतु महाराजः ।

राजा—भगवांस्तावदाहूयताम् । ( निष्क्रान्तः । )

( ततः प्रविशति भगवान् । )

भगवान्—( सर्वतो विलोक्य ) भोः ! किन्नु खल्विदम् ।

गजेन्द्राः कल्प्यन्ते तुरगपतयो वर्मरचिताः
रथाः सानूकर्षाः कृतपरिकरा योधपुरुषाः ।
समुद्योगं दृष्ट्वा भयमननुभूतं स्पृशति मां
न खल्वात्मन्यस्तं कृतमतिरहं ते तु चपलाः ॥ ७

राजा—जयतु भगवान् जयतु । विराटो भगवन् ! अभिवादये ।

भगवान्—स्वस्ति ।

विराटः —भगवन् ! एतदासनमास्यताम् ।

भगवान् —( उपविश्य ) भो राजन् !

उद्योगः प्रस्तुतः कस्माच्छ्रीर्न सन्तोषमिच्छति ।
पीडयिष्यति सोत्सेकान् पीडितान् मोक्षयिष्यति ॥ ८

राजा—भगवन् ! गोग्रहणादवमानितोऽस्मि ।

भगवान्—केन कारणेन ।

राजा—धार्तराष्ट्रैः ।

भगवान्—( आत्मगतम् ) भोः कष्टम्,

एकोदकत्वं खलु नाम लोके मनस्विनां कम्पयते मनांसि ।
वैरप्रियैस्तैर्हि कृतेऽपराधे यत्सत्यमस्माभिरिवापराद्धम् ॥ ९

विराटः —भगवान् ! किमिदानीं विचार्यते ।

भगवान्—न खलु किञ्चित् । तेषामुत्सेकः ।

राजा—अद्यप्रभृति निभृता भविष्यन्ति । यदि शक्तोऽपि युधिष्ठिरो मर्षयति, अहं न मर्षयामि ।

भगवान्—( आत्मगतम् )

अद्येदानीं पर्णशय्या च भूमौ राज्यभ्रंशो द्रौपदीधर्षणं वा ।
वेषान्यत्वं संश्रितानां निवासः सर्वं श्लाघ्यं यत्क्षमा ज्ञायते मे ॥ १०

( प्रविश्य )

भटः —जयतु महाराजः ।

राजा—अथ किं चेष्टते दुर्योधनः ।

भटः —न खलु दुर्योधन एव, पृथिव्यां राजानः सर्वे प्राप्ताः ।

द्रोणश्च भीष्मश्च जयद्रथश्च शल्योऽङ्गराजः शकुनिः कृपश्च ।
तेषां रथोत्कम्पचलत्पताकैर्भग्ना ध्वजैरेव वयं न बाणैः ॥ ११

राजा—( उत्थाय कृताञ्जलिः ) कथं तत्रभवान् गाङ्गेयोऽपि प्राप्तः ।

भगवान्—साधु धर्षितेनापि नातिक्रान्तः समुदाचारः । ( आत्मगतम् ) भोः,

किमर्थं खलु सम्प्राप्तः कुरूणां गुरुरुत्तमः ।
शङ्के तीर्णा प्रतिज्ञेति स्मारणं क्रियते मम ॥ १२

( प्रकाशम्[1] )

राजा—कोऽत्र ।

( प्रविश्य )

भटः—जयतु महाराजः ।

विराटः—सूतस्तावदाहूयताम् ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( प्रविश्य )

सूतः—जयत्वायुष्मान् ।

विराटः—

रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः ।
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः ॥ १३

सूतः—यदाज्ञापयत्यायुष्मान् । आयुष्मन् !

रिपूणां सैन्यभेदेषु यस्ते परिचितो रथः ।
रथचर्यां बहिष्कर्तुं तमास्थायोत्तरो गतः ॥ १४

विराटः—कथं निर्यातः कुमारः

भगवान्—भो राजन् ! संवार्यतां संवार्यतां कुमारः ।

अगणितगुणदोषो युद्धतीक्ष्णश्च बाल्या-
न्न च दहति न कश्चित् सन्निकृष्टो रणाग्निः ।
अथ च परिहरन्ते धार्तराष्ट्रा न किञ्चिन्
न खलु परिभवात् ते युद्धदोषान् ब्रवीमि ॥ १५

राजा—तेन हि शीघ्रमन्यो रथः कल्प्यताम् ।

सूतः—यदाज्ञापयत्यायुष्मान् ।

राजा—अथवा एहि तावत् ।

सूतः—आयुष्मन् ! अयमस्मि ।

---

१. अत्र द्वित्राणि वाक्यानि त्रुटितानि ।

राजा —

त्वमिदानीं कुमारस्य किं न वाहितवान् रथम्।
अनुज्ञातोऽसि किं तेन न राज्ञां सारथिर्भवान्॥ १६

सूतः —प्रसीदत्वायुष्मान्। रथं कल्पयित्वा तु सूतसमुदाचारेणोपस्थितः खल्वहम्। कुमारेण,

किन्नु तत्परिहासार्थं किन्नु तत्रास्ति कौशलम्।
मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला॥ १७

भगवान् —राजन्! अलमलं सम्भ्रमेण।

यदि स्वचक्रोद्धतरेणुदुर्दिनं रथं समास्थाय गता बृहन्नला।
परान् क्षणैर्नेमिरवैर्निवारयन् विनापि बाणान् रथ एव जेष्यति॥ १८

राजा —तेन हि शीघ्रमन्यो रथः कल्प्यताम्।

सूतः —यदाज्ञापयत्यायुष्मान् ( निष्क्रान्तः )

( प्रविश्य )

भटः —भग्नः खलु कुमारस्य रथः।

राजा—कथं भग्नो नाम।

भटः —श्रोतुमर्हति महाराजः।

बहुभिः समराभिज्ञैराछिन्नोऽश्वपथः परैः।
भग्नो वाहनलोभेन[1] श्मशानाभिमुखो रथः॥ १९

भगवान् —( आत्मगतम् ) आ अत्र खलु गाण्डीवम्। ( प्रकाशम् ) भो राजन्!

निमित्तं किञ्चिदुत्पन्नं श्मशानाभिमुखे रथे।
धार्तराष्ट्राः स्थिता यत्र श्मशानं तद् भविष्यति॥ २०

राजा —भगवन्! अकाले स्वस्थवाक्यं मन्युमुत्पादयति।

भगवान्—अलं मन्युना। कदाचिदनृतं नोक्तपूर्वम्।

राजा—आ अस्त्येतत्। गच्छ भूयो ज्ञायतां वृत्तान्तः।

भटः —यदाज्ञापयति महाराजः। ( निष्क्रान्तः। )

राजा —

को नु खल्वेष सहसा कम्पयन्निव मेदिनीम्।
नदीस्रोत इवाविद्धः क्षणात् संवर्तते ध्वनिः॥ २१

ज्ञायतां शब्दः।

---

१. गहनलोभेन।

( प्रविश्य )

भटः —जयतु महाराजः। श्मशानान्मुहूर्तविश्रान्ततुरगेण कुमारेण तु–

भगवान्—एष मामनृतवादिनं न कुर्यात्।

भटः —

कृता नीला नागाः शरशतनिपातेन कपिला
हयो वा योधो वा न कश्चिच्छरशतम्।
शरैः स्तम्भीभूताः शरपरिकराः स्यन्दनवराः
शरैश्छन्ना मार्गाः स्रवति धनुरुग्रां शरनदीम्॥ २२

भगवान्—( आत्मागतम् )

एतदक्षयतूणीत्वं येन शक्रस्य खाण्डवे।
यावत्यः पतिता धारास्तावन्तः प्रेषिताः शराः॥ २३

राजा—अथ परेष्विदानीं को वृत्तान्तः।

भटः —अप्रत्यक्षं हि तत्र मे। प्रवृत्तिपुरुषाः कथयन्ति—

धनुर्घोषं द्रोणस्तदिदमिति बुद्‍ध्वा प्रतिगतः
ध्वजे[1] बाणं दृष्ट्वा कृतमिति न भीष्मः प्रहरति।
शरैर्भग्नः कर्णः किमिदमिति चान्ये नृपतयो
भयेऽप्येको बाल्यान्न भयमभिमन्युर्गणयति॥ २४

भगवान्—कथमभिमन्युः प्राप्तः। भो राजन्!

युध्यते यदि सौभद्रस्तेजोग्निवंशयोर्द्वयोः।
सारथिः प्रेष्यतामन्यो विक्लवात्र बृहन्नला॥ २५

राजा —मा मा भवानेवम्।

भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधं
कृत्वा कर्णजयद्रथौ च विमुखौ शेषांश्च तांस्तान् नृपान्।
सौभद्रं स्वशरैर्न धर्षयति किं भीतः पितुः प्रत्ययात्
संसृष्टोऽपि वयस्यभावसदृशं तुल्यं वयो रक्षति॥ २६

भटः —एष खलु कुमारस्य रथः,

आलम्बितो भ्रमति धावति तेन मुक्तो न प्राप्य धर्षयति नेच्छति विकर्तुम्।
आसन्नभूमिचपलः परिवर्तमानो योग्योपदेशमिव तस्य रथः करोति॥ २७

राजा—गच्छ। भूयो ज्ञायतां वृत्तान्तः।

---

१. स्वजे।

भटः —यदाज्ञापयति महाराजः। ( निष्क्रम्य प्रविश्य ) जयतु महाराजः। जयतु विराटेश्वरः। प्रियं निवेदये महाराजाय। अवजितं गोग्रहणम्। अपयाता धार्तराष्ट्राः।

भगवान्—दिष्ट्या भवान् वर्धते।

राजा—न न। भगवतो वृद्धिरेषा। अथ कुमार इदानीं क्व।

भटः —दृष्टपरिस्पन्दानां योधपुरुषाणां कर्माणि पुस्तकमारोपयति कुमारः।

राजाः —अहो श्लाघनीयव्यापारः खल्वयं कुमारः।

ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा।
अकालान्तरिता पूजा नाशयत्येव वेदनाम्॥ २८

अथ बृहन्नलेदानीं क्व।

भटः —प्रियनिवेदनार्थमभ्यन्तरं प्रविष्टा।

राजा—बृहन्नला तावदाहूयताम्।

भटः —यदाज्ञापयति महाराजः।

( ततः प्रविशति बृहन्नला। )

बृहन्नला — ( निरूप्य सविमर्शम् )

गाण्डीवेन मुहूर्तमाततगुणेनासीत् प्रतिस्पर्धितं
बाणानां परिवर्तनेष्वविशदा मुष्टिर्न मे संहता।
गोधास्थानगता न चास्ति पटुता स्थाने हृतं सौष्ठवं
स्त्रीभावाच्छिथिलीकृतः परिचयादात्मा तु पश्चात् स्मृतः॥२९

मया हि,

अनेन वेषेण नरेन्द्रमध्ये लज्जायमानेन धनुर्विकृष्टम्।
यात्रा तु तावच्छरदुर्दिनेषु शीघ्रं निमग्नः कलुषश्च रेणुः॥३०

भो !

जित्वापि गां विजयमप्युपलभ्य राज्ञो नैवास्ति मे जयगतो मनसि प्रहर्षः।
दुःशासनं समरमूर्धनि सन्निगृह्य बद्ध्वा यदद्य न विराटपुरं प्रविष्टः॥ ३१

उत्तराप्रीतिदत्तालङ्कारेणालङ्कृतो व्रीडित इवास्मि राजानं द्रष्टुम्। तस्माद् विराटेश्वरं पश्यामि। अये ! अयमार्यो युधिष्ठिरः,

सयौवनः श्रेष्ठतपोवने रतो नरेश्वरो ब्राह्मणवृत्तमाश्रितः।
विमुक्तराज्योऽप्यभिवर्धितः श्रिया त्रिदण्डधारी न च दण्डधारकः॥३२

( उपगम्य ) भगवन् ! अभिवादये।

भगवान्—स्वस्ति।

बृहन्नला—जेदु भट्टा। [ जयतु भर्ता। ]

राजा—

अकारणं रूपमकारणं कुलं महत्सु नीचेषु च कर्म शोभते।
इदं हि रूपं परिभूतपूर्वकं तदेव भूयो बहुमानमागतम् ॥ ३३

बृहन्नले! परिश्रान्तामपि भवतीं भूयः परिश्रमयिष्ये। उच्यतां रणविस्तरः।

बृहन्नला—सुणादु भट्टा। [ शृणोतु भर्ता। ]

राजा—ऊर्जितं कर्म। संस्कृतमभिधीयताम्।

बृहन्नला—श्रोतुमर्हति महाराजः।

( प्रविश्य )

भटः—जयतु महाराजः।

राजा—अपूर्व इव ते हर्षो ब्रूहि केनासि विस्मितः।

भटः—अश्रद्धेयं प्रियं प्राप्तं सौभद्रो ग्रहणं गतः ॥ ३४

बृहन्नला—कथं गृहीतः। ( आत्मगतम्। )

तुलितबलमिदं मयाद्य सैन्यं परिगणितं च रणेऽद्य मे स दृष्टः।
सदृश इह तु तेन नास्ति कश्चित् क इह भवेन्निहतेषु कीचकेषु ॥३५

भगवान्—बृहन्नले! किमेतत्।

बृहन्नला—भगवन्!

न जाने तस्य जेतारं बलवाञ्छिक्षितस्तु सः।
पितृणां भाग्यदोषेण प्राप्नुयादपि धर्षणम् ॥ ३६

राजा—कथमिदानीं गृहीतः।

भटः—रथमासाद्य निःशङ्कं बाहुभ्यामवतारितः।

राजा—केन।

भटः—यः किलैष नरेन्द्रेण विनियुक्तो महानसे ॥ ३७

बृहन्नला—( अपवार्य ) एवमार्यभीमेन परिष्वक्तः, न गृहीतः।

दूरस्था दर्शनादेव वयं सन्तोषमागताः।
पुत्रस्नेहस्तु निर्विष्टो येन सुव्यक्तकारिणा ॥ ३८

राजा—तेन सत्कृत्य प्रवेश्यतामभिमन्युः।

भगवान्—भो राजन्! वृष्णिपाण्डवनाथस्याभिमन्योः पूजां भूयादिति लोको ज्ञास्यति। तदवधीरणमस्य न्याय्यम्।

राजा—नावधीरणमर्हति यादवीपुत्रः। कुतः,

पुत्रो ह्येष युधिष्ठिरस्य तु वयस्तुल्यं हि नः सूनुना
सम्बन्धो द्रुपदेन नः कुलगतो नप्ता हि तस्माद् भवेत्।
जामातृत्वमदूरतोऽपि च भवेत् कन्यापितृत्वं हि नः
पूजार्होऽप्यतिथिर्भवेत् स्वविभवैरिष्टा हि नः पाण्डवाः ॥ ३९

भगवान्—एवमेतत् । वक्तव्यं परिहर्तव्यं च ।

राजा—अथ केनायं प्रवेशयितव्यः ।

भगवान्—बृहन्नलया प्रवेशयितव्यः ।

राजा—बृहन्नले ! प्रवेश्यतामभिमन्युः ।

बृहन्नला—यदाज्ञापयति महाराजः ( आत्मगतम् ) चिरस्य खल्वाकाङ्क्षितोऽयं नियोगो लब्धः ।

भगवान्—( आत्मगतम् )

अद्यदानीं यातु सन्दर्शनं वा शून्ये दृष्ट्वा गाढमालिङ्गनं वा ।
स्वैरं तावद् यातु मुद्बाष्पतां वा मत्प्रत्यक्षं लज्जते ह्येष पुत्रम् ॥ ४०

राजा—पश्यतु भवान् कुमारस्य कर्म ।

नृपा भीष्मादयो भग्नाः सौभद्रो ग्रहणं गतः ।
उत्तरेणाद्य संक्षेपादर्थतः पृथिवी जिता ॥ ४१

( ततः प्रविशति भीमसेनः । )

भीमसेनः —

आदीपिते जतुगृहे स्वभुजावसक्ता मद्भ्रातरश्च जननी च मयोपनीता ।
सौभद्रमेकमवतार्य रथात्तु बालं तं च श्रमं प्रथममद्य समं हि मन्ये ॥ ४२

इत इतः कुमारः ।

( ततः प्रविशत्यभिमन्युः । )

अभिमन्युः —भोः ! को नु खल्वेषः,

विशालवक्षास्तनिमार्जितोदरः स्थिरोन्नतांसोरुमहान् कटीकृशः ।
इहाहृतो येन भुजैकयन्त्रितो बलाधिकेनापि न चास्मि पीडितः ॥ ४३

बृहन्नला—इत इतः कुमारः ।

अभिमन्युः —अये अयमपरः कः,

अयुज्यमानैः प्रमदाविभूषणै करेणुशोभाभिरिवार्पितो गजः ।
लघुश्च वेषेण महानिवौजसा विभात्युमावेषमिवाश्रितो हरः ॥ ४४

बृहन्नला—( अपवार्य ) इममिहानयता किमिदानीमार्येण कृतम् ।

